**भाष्यम् – अतो वक्ति**

**ॐ ॥ अनुकृतेस्तस्य च ॥ ॐ ॥२२॥**

**'तमेव भान्तमनुभाति सर्वम्' (कठ.५-१५) इत्यनुकृतेः, 'तस्य भासा सर्वमिदं विभाति' (कठ. ५-१५) इति वचनाच्च परमात्मैवानिर्देश्य-सुखरूपः ।**

ಅನುವಾದ - ಈ ಪೂರ್ವಪಕ್ಷವನ್ನು ನಿರಾಕರಿಸುವುದಕ್ಕಾಗಿ ಸೂತ್ರಕಾರರು 'ಅನುಕೃತೇಸ್ತಸ್ಯ ಚ' ಎಂಬ ಸೂತ್ರವನ್ನು ರಚನೆ ಮಾಡಿದ್ದಾರೆ.

'ಪ್ರಕಾಶಸ್ವರೂಪನಾದ ಭಗವಂತನನ್ನು ಅನುಸರಿಸಿಯೇ ಸಕಲವೂ ಬೆಳಗುತ್ತದೆ'. ಹೀಗೆ ಪರಮಾತ್ಮನ ಪ್ರಕಾಶದಿಂದಲೇ ಎಲ್ಲವೂ ಬೆಳಗುತ್ತದೆಂದು ಹೇಳಿದ್ದರಿಂದಲೂ, ಅನಿರ್ದೇಶ್ಯ ಸುಖಸ್ವರೂಪನೆಂದು ಕಾಠಕವು ಪರಮಾತ್ಮನನ್ನೇ ಹೇಳುತ್ತಿದೆ.

ಪ್ರತಿಪದಾರ್ಥ --ಸಿದ್ಧಾಂತಸ್ಥಾಪನೆಗಾಗಿ, ಸೂತ್ರವನ್ನು ಹೇಳುತ್ತಾ ವ್ಯಾಖ್ಯಾನಿಸುತ್ತಿದ್ದಾರೆ.

ಭಾಂತಂ = ಪ್ರಕಾಶಸ್ವರೂಪನಾದ, ತಮೇವ = ಪರಮಾತ್ಮನನ್ನೇ, ಅನು = ಅನುಸರಿಸಿ, ಸರ್ವಮ್ = ಸಕಲವೂ, ಭಾತಿ = ಪ್ರಕಾಶಿಸುತ್ತದೆ, ಇತಿ = ಹೀಗೆ, ಅನುಕೃತೇಃ = ಪರಮಾತ್ಮನ ಅನುಕರಣವೇ ಹೇಳಲ್ಪಟ್ಟದ್ದರಿಂದ: ಮತ್ತು, ತಸ್ಯ = ಪರಮಾತ್ಮನ, ಭಾಸಾ = ಕಾಂತಿಯಿಂದಲೇ, ಸರ್ವಮಿದಂ = ಸಕಲವೂ ಸಹ, ವಿಭಾತಿ = ಪ್ರಕಾಶಿಸುತ್ತದೆ, ಇತಿ = ಹೀಗೆ, ವಚನಾಚ್ಚ = ಕಾಠಕದಲ್ಲೇ ಹೇಳಿದ್ದರಿಂದಲೂ ಸಹ, ಪರಮಾತ್ಮೈವ = ಪರಮಾತ್ಮನೇ, ಅನಿರ್ದೇಶ್ಯಸುಖರೂಪಃ = ಇಷ್ಟೇ ಎಂದು ನಿರ್ದೇಶ ಮಾಡಲಾಗದ ಸುಖಸ್ವರೂಪನು ಆಗಿದ್ದಾನೆ. (१)

---

इतरमात्रनिष्ठत्वे त्वसम्भवाक्षेपात् फलतस्तेनास्याऽक्षेपिकी सङ्गतिरुक्ता भवति । तथा चशब्दसूचितमानुकूल्येन गृह्यमाणत्वं विषयः । विष्णोरन्यस्य वेति सन्देहः । ज्ञानिसुखस्यैवेति पूर्व पक्षः । तथा चानिर्देश्यत्वाज्ञेयत्वे च तस्यैवेति फलं, सुखश्रुतिः, प्रकृतत्वादिरूपयुक्तिश्च सूचिता भवति ।

(१) भाष्यदीपिका – सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे – अत इति ॥ 'इत्यनुकृतेः' इत्यनुभानश्रुतेरित्यर्थः । अनुभानं नाम तदिच्छानुरोधेन भानं क्रियाविशेषः । सूत्रे तस्येत्य स्यानुकृतेरित्यनेनापि सम्बन्धे तेनैवानुकरणप्रतिसम्बन्धिन आनुकूल्येन गृह्यमाणस्य तत्कर्तुः सूर्यादितेजसश्च लाभो भवतीति स्पष्टत्वात् तदुभयानुक्तिः । यद्वा – पूर्वसूत्रात् तदित्यस्य विपरिणतस्येहानुवर्तनादुभयलाभो भवतीत्याशयेन तदुभयानुक्तिः । न केवलं तस्येत्येतत् समन्वेतव्यानुकूल्येन गृह्यमाणत्वाख्यलिङ्गधर्मिणः, सूर्यादितेजसश्च परामर्शकं, किन्तु

श्रुतिप्रतीकरूपमपि सर्वजगत्प्रकाशकत्वपरं चेत्याशयेन तद्धेत्वन्तरपरतया व्याचष्टे – **तस्येति** ।। 'इति वचनात्' इत्यनेन सूत्रे इत्युक्तेरिति शेषो दर्शितः । यद्यपि सूत्रभाष्ययोः 'अनुभाति' इति श्रुत्यनुसारादनुभानादिति वाच्यम् । तथाऽपि –

**'तापिनी पाचिनी चैव शोषिणी च प्रकाशिनी ।**
**नैव राजन् रवेः शक्तिः शक्तिर्नारायणस्य सा ।।'**

इति ऐतरेयभाष्योदाहृतपाद्मवचनात् सूर्यादिकर्तृकप्रतपनादिकमपि परमात्माधीनमिति दर्शयितुमनुकृतेरित्युक्तम् । सूत्रे तदनुसारिभाष्ये च चशब्दो द्वितीयसूत्रस्य वक्ष्यमाणव्याख्यानभेदेन सर्वजगत्प्रकाशकत्वरूपोक्तहेतुसमुच्चये वा, सूर्याद्यप्रकाश्यत्वरूपानुक्त हेतुसमुच्चये वा द्रष्टव्यः । सूत्रे समन्वयसूत्रादनुवृत्तस्य विधेयपरस्य तत्त्वित्यस्यार्थमाह – **परमात्मैवेति** ।। नतु ज्ञानिसुखमित्येवशब्दार्थः । लिङ्गसमन्वयेन भवत्फलं दर्शयति – **अनिर्देश्येति** ।। अनिर्देश्यश्चासौ सुखरूपश्च इति वा, अनिर्देश्यं यत् सुखं तद्रूप इति वा विग्रहः । अत्र रूपशब्दो भिन्नक्रमः । तथा चानिर्देश्यं परमं सुखं परमात्मरूपमित्यन्वयः । एक इत्यादौ पुल्लिङ्गेन प्रकृतस्यैतदिति नपुंसकलिङ्गेन ग्रहणाय रूपशब्दप्रयोगः । उपलक्षण-मेतत् । अनुग्राह्यश्चेत्यपि द्रष्टव्यम् ।

वस्तुतस्तु – वचनाच्चेति शब्दस्य सुखरूपश्चेत्यपि सम्बन्धे तेनैवाऽनुकूल्येन गृह्यमाणाख्यः साध्यधर्मी सूचित इति ध्येयम् । यद्यप्यनिर्देश्यत्वमज्ञेयत्वं चेत्युपक्रमादुभयं ग्राह्यं, न त्वेकं, सुखरूपमिति चाधिकम् । तथाऽपि पूर्वपक्ष्युक्तसुखश्रुतेः सुखरूपे ब्रह्मणि सावकाशत्वज्ञापनाय 'तदेतत्' इति वाक्योक्तमनिर्देश्यसुखरूपत्वमेव गृहीतम् । अज्ञेयत्वमपि द्रष्टव्यम् । यद्यप्यत्र भाष्ये लिङ्गद्वयस्याऽनुकूल्येन गृह्यमाणस्य वाऽनिर्देश्यसुखरूपस्य वा विष्णुत्वे साध्ये साक्षाद्धेतुत्वं भाति । टीकायां तु – **'तदेतत्'** इति श्रुतिस्थतच्छब्देन समीपोक्तज्ञानिसुखपरित्यागेन **'चेतनश्चेतनानाम्'** (कठ.५-१३) इति व्यवधानेन प्रकृतपरमात्मग्रहणे लिङ्गद्वयं हेतुत्वेन योजितम् । तथाऽपि हेतुद्वयेन तच्छब्देन ज्ञानिसुखपरित्यागेन परमात्मन एव ग्रहणसिद्धौ तत एव तच्छब्दगृहीतस्य परमात्मन एवानिर्देश्यसुखरूपत्वं पर्यवस्यतीत्याशयेन भाष्ये लिङ्गद्वयस्य प्रकृतसाध्यहेतुत्वेनोक्तिरित्यविरोधः ।

केचित्तु – **'परमात्मैवानिर्देश्यसुखरूपः'** इति भाष्यमेवानुकृतिसूत्रे **'आनन्दमयोऽभ्यासात्'** इत्यादाविव समन्वेतव्यशब्दादेर्विष्णुपरत्व एव हेतुर्नोच्यते, किन्त्वनिर्देश्यं सुखमित्यत्र समीपोक्तज्ञानिसुखपरित्यागे हेतुरुच्यत इत्यत्र ज्ञापकं, टीकाऽपि तदनुसारिणीत्याहुः ।

तथा चायं सिद्धान्ते श्रुत्यर्थः –

**भाष्यम् – नहि ज्ञानिसुखमनुभाति सर्वं, नच तद्भासा ।**

**'एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति ।**
**तमात्मस्थं येऽनुपश्यन्ति धीराः ।।'** *(कठ. ५-१२.)*

इति पूर्ववाक्ये 'य एकः' ज्ञानानन्दाद्यभिन्नः समाभ्यधिकशून्यो वा यः सर्वमस्य वशेऽस्तीति **'सर्ववशी'** यः **'सर्वभूतान्तरात्मा'** सर्वप्राणिनामन्तर्नियामकः **'य एकं'** स्वस्वरूपं बहुधा करोति नियम्यानन्त्यात् । **'तं'** प्रकृतम् **'आत्मस्थं'** जीवहृदयस्थितं ये **'धीराः'** ज्ञानिनोऽनुपश्यन्तीति प्रकृता ये ज्ञानिनस्तेषामेव **'शाश्वतं सुखं'** नित्याभिव्यक्तसौख्यं नेतरेषाम् । अनेन ब्रह्मसामर्थ्यमुक्तं भवति । एवं **'नित्यो नित्यानाम्'** इति वाक्यमपि ब्रह्ममाहात्म्यपरतया व्याख्येयम् ।

'तदेतत्' इत्यादिनाऽपि प्रकृतभगवत्स्वरूपमेव विशेषतः प्रतिपाद्यत इति । मन्यन्त इत्यस्योत्तरत्रान्वयः । तथा च 'यतो वाचो निवर्तन्ते' (तै.२-४-१) 'एषोऽस्य परम आनन्दः' (बृ.६-३-३२) इत्यादौ प्रसिद्धम् अनिर्देश्यं परमं सुखं कथं नु तद् विजानीयामिति मन्यन्त इत्यानुकूल्येन गृह्णन्ति । ज्ञानार्थं तद्भानं वा प्रार्थयन्ते । 'किमु भाति न भाति वा' इति तस्य दुर्ज्ञेयत्वं च वदन्ति ज्ञानिनः । तद् ब्रह्मणो रूपं स्वरूपभूतं सुखमेतदेकं रूपं बहुधा यः करोतीति प्रकृतेश्वररूपाभिन्नमिति मन्यन्ते ज्ञानिन इति । एतच्छब्दस्येश्वरपरत्वेऽपि रूपशब्दसामानाधिकरण्यान्नपुंसकलिङ्गतोपपत्तिः । तदुक्तं न्यायविवरणे – 'यद् ब्रह्मानिर्देश्यं सुखमिति वदन्ति तदेतत्स्वरूपमिति मन्यन्त इति' । काठकभाष्ये तु – तद् 'गुह्यं ब्रह्म सनातनम्' इत्युपक्रान्तम् । 'रूपं रूपं प्रतिरूपो बभूव' (कठ.५-९) इति जीवस्य प्रतिबिम्बत्वमुक्तम् । रूपशब्देन प्रकृतमेतत् 'एकं रूपम्' इत्यत्र प्रकृतं च भगवद्रूपम् 'अनिर्देश्यम्' इत्थमिति साकल्येन निर्वक्तुमशक्यं परमं सुखमिति मन्यन्ते ज्ञानिन इति सुखरूपत्वविधिपरतया व्याख्यातम् । भाष्येऽप्यनिर्देश्यसुखरूपमित्येतावन्मात्रग्रहणेन श्रुतौ सुखरूपत्वं विधेयमिति सूचितम् । तदनिर्देश्यपरम-सुखात्मकं भगवद्रूपं तत्प्रसादमृते किमु भाति न भाति वेति सम्यग् भाति न भातीति कथं न्वहं जानीयामिति शिष्टवाक्यार्थस्तत्रैवोक्तः । विवृतं चैतद् व्यासतीर्थीये – 'तत्' अनिर्देश्यपरमसुखात्मकं भगवद्रूपं तत्प्रसादमृते किमु सम्यग् भाति ? न भाति वा ? इति प्रश्नस्योत्तरभूतम् एकं निश्चितार्थं 'कथमहं विजानीयां' न केनापि प्रकारेणेति । अत्रेतिशब्द उभयान्वयी । तथा च किमु भातीति प्रश्नस्योत्तरभूतं न भातीति वाक्योक्तमेकमज्ञेयत्व-रूपमर्थमिति योजना ।

केचित्तु – यदेवं ब्रह्म तत्प्रसादमृते 'नु' इदानीं **'कथमहं विजानीयाम्'** प्रार्थनायां लिङ् । न कथमपीत्यर्थः । ज्ञानिवाक्यानुकरणमेतत् । भगवत्प्रसादादपि किं साकल्येन तज्ज्ञानं

**ಅನುವಾದ - ಜ್ಞಾನಿಸುಖವನ್ನು ಅನುಸರಿಸಿ ಜಗತ್ತು ಬೆಳಗಲು ಸಾಧ್ಯವಿಲ್ಲ ಅಥವಾ ಜ್ಞಾನಿಗಳ ಸುಖದಿಂದಲೂ ಜಗತ್ತು ಬೆಳಗುತ್ತಿಲ್ಲ.**

ಪ್ರತಿಪದಾರ್ಥ -- 'ತಮೇವ ಭಾಂತಂ' ಎಂಬ ವಾಕ್ಯದಲ್ಲಿ ಸೂರ್ಯ-ಚಂದ್ರಾದಿಗಳು ಪರಮಾತ್ಮನ ಅಧೀನವಾಗಿ, ಬೆಳಗುತ್ತಿದ್ದಾರೆಂದು ಹೇಳಿ, ಅಂತಹ ಸೂರ್ಯಾದಿಗಳ ಬೆಳಕಿನಿಂದ ಜಗತ್ತು ಬೆಳಗುತ್ತಿದೆ ಎಂದು ಹೇಳಬಹುದಲ್ಲವೆ ? ಎಂಬ ಪ್ರಶ್ನೆಗೆ ಉತ್ತರಿಸುತ್ತಿದ್ದಾರೆ -

ಜ್ಞಾನಿಸುಖಂ = ಜ್ಞಾನಿಗಳ ಸುಖವನ್ನು, ಅನು = ಅನುಸರಿಸಿ, ಸರ್ವಂ = ಸಕಲವೂ, ನಹಿ ಭಾತಿ = ಪ್ರಕಾಶಿಸುವುದಿಲ್ಲ, ತದ್ಭಾಸಾ = ಜ್ಞಾನಿಗಳ ಪ್ರಕಾಶದಿಂದಲೂ ಸಹ ನೇರವಾಗಿ, ನಚ = ಪ್ರಕಾಶಿಸುವುದಿಲ್ಲ.(१)

**भाष्यम् – 'अहं तत् तेजो रश्मीत्' इति नारायणभासा हि सर्वं भाति ।**

**ಅನುವಾದ - 'ಅಹಂ ತತ್ ತೇಜೋ ರಶ್ಮೀತ್' ಎಂಬಂತೆ ನಾರಾಯಣನ ಕಾಂತಿಯಿಂದಲೇ ಸಮಸ್ತ ಜಗತ್ತೂ ಪ್ರಕಾಶಿಸುತ್ತಿದೆ.**

ಪ್ರತಿಪದಾರ್ಥ -- ಜ್ಞಾನಿಗಳ ಸುಖದಿಂದ ಪ್ರಕಾಶಿಸುವುದು ಬೇಡ, ಅದರೂ ಸಹ ಪರಮಾತ್ಮನಿಂದ ಎಂದು ಕಾಠಕವು ಹೇಳುತ್ತಿದೆ ಎಂದು ಹೇಗೆ ನಿಶ್ಚಯಿಸುತ್ತೀರಿ? ಎಂಬ ಪ್ರಶ್ನೆಗೆ ಎರಡನೇ ಸೂತ್ರದಲ್ಲಿರುವ 'ಅಪಿ' ಪದದಿಂದ ಸೂಚಿತವಾದ ಶ್ರುತಿಯನ್ನು ಹೇಳುತ್ತಿದ್ದಾರೆ -

---

भवतीति नचिकेता यमं पृच्छति – **किमु भातीति** ।। उशब्दः सम्यगित्यर्थे । किम्वित्येकं वा । तथात्वे सम्यगिति शेषः । उत्तरमाह यमः – **न भातीति** ।। वाशब्दोऽवधारणे । न भात्येवेति व्याख्याति ।

(१) **भाष्यदीपिका** – ननु **'तमेव भान्तम्'** इति वाक्ये सूर्यादितेजसां परमात्माधीन-प्रकाशकर्तृत्वस्य **'तस्य भासा'** इति वाक्ये च सर्वस्य जगतस्तत्प्रभाप्रकाश्यत्वस्य च श्रवणेनासिद्धिपरिहारे कुतस्तयोर्विष्णुत्वसाध्येनाव्यभिचरितत्वम्, येन तल्लिङ्गद्वयबलात् समीपोक्तज्ञानिसुखपरामर्शपरित्यागः स्यादित्यत आह – **न हीति** ।। सर्वमित्युभयान्वयी। भातीति शेषः । तथा च **'हि'** यस्मात् **'सर्वं'** सूर्यादितेजः ज्ञानिसुखमनुसृत्य **'न भाति'** न प्रकाशते । तथा **'तद्भासा'** तस्य ज्ञानिसुखस्य प्रकाशेन **'सर्वं'** जगत् **'न भाति'** न प्रकाशते चेत्यर्थः । वक्ष्यमाणप्रमाणविरोधादिति भावः । चशब्दः समुच्चये। अतो न लिङ्गद्वयमन्यत्रावकाशवदिति वाक्यशेषः ।

ಅಹಂ = ನಾನು, ತತ್ ತೇಜೋ ರಶ್ಮೀತ್ = ಪ್ರಕಾಶಕರಾದ ಸೂರ್ಯ, ಚಂದ್ರಾದಿಗಳಿಗೂ ಪ್ರಕಾಶರೂಪನು, ಇತಿ = ಹೀಗೆ ಹೇಳಿದ್ದರಿಂದ, ನಾರಾಯಣಭಾಸಾ = ವಿಷ್ಣುವಿನ ಪ್ರಕಾಶದಿಂದಲೇ, ಸರ್ವಂ = ಎಲ್ಲವೂ, ಭಾತಿ = ಪ್ರಕಾಶಿಸುತ್ತದೆ, ಆದ್ದರಿಂದ 'ಆನುಕೂಲ್ಯೇನ ಗೃಹ್ಯಮಾಣತ್ವ' ಹಾಗೂ 'ಅನಿರ್ದೇಶ್ಯತ್ವಗಳು' ಪರಮಾತ್ಮನ ಧರ್ಮವೆಂದು ಸಿದ್ಧವಾಗುತ್ತದೆ.[१]

---

(१)भाष्यदीपिका – अस्त्वेतदुभयं ज्ञानिसुखेऽनुपपन्नम् । तथाऽप्यनेन कुतः परमात्मनो ग्रहणं, अस्य परमात्मत्वसाध्यसामानाधिकरण्यानिश्चयादित्यतस्तत्र द्वितीयसूत्रस्थापि-पदेन सूचितां श्रुतिमाह – **अहमिति** ।। अहमितीत्यनन्तरं श्रुतेरिति शेषः । इतिशब्द आद्यार्थे । तेन **'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति'** (कठ.५-१५) इत्याथर्वणश्रुतिरपि गृह्यते । **नारायणेति** ।। नारायणाधीनभासेत्यर्थः । हिशब्दो यत इत्यर्थे, प्रसिद्धौ च । **'सर्वं'** सूर्यादितेजः **'भाति'** प्रकाशते । यद्वा – **'नारायणभासा'** नारायणीयभासा **'सर्वं'** जगत् **'भाति'** प्रकाश्यत इत्यर्थः । **'इति ज्ञायते'** इति शेषः । श्रुतौ **'रश्मीत्'** इत्यनेन सूर्यादितेजसां नारायणाधीनप्रकाश-कर्तृत्वस्य, **'तेजः'** इत्यनेन सर्वस्य जगतो नारायणीयप्रकाशप्रकाश्यत्वस्य चोक्तत्वादिति भावः । **'अहम्'** इति, श्रुतिस्त्वन्तर्नये व्याख्याता । अनेन – तदुक्तमित्यतः सूत्रेतदित्यनुवर्तते । तस्येत्यावर्तते विपरिणम्यते च । असम्भवादिति चानुवर्तते । तथा च –

**'तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम् ।**
**कथं नु तद्विजानीयाम् ।।'** *(कठ. ५-१४.)*

इत्यानुकूल्येन गृह्यमाणं तदेतच्छब्दपरामृश्यं अनिर्देश्यं सुखं तत्तु विष्णुरूपमेव, न समीपोक्तज्ञानिसुखम् । कुतः ? **'तस्य'** सूर्यादितेजसः **'तस्य'** आनुकूल्येन गृह्यमाणस्य सुखस्य तस्मिन् **'तमेव भान्तम्'** इति **'अनुकृतेः'** अनुभानश्रवणात् तस्यैतदधीन-प्रकाशकर्तृत्वश्रवणादस्यान्यतेजोनियन्तृत्वश्रवणादिति यावत् । तथा तस्य सर्वस्य जगतस्तस्य तत्प्रकाशप्रकाश्यत्वस्य **'तस्य भासा'** (कठ.५-१५) इति श्रुतावुक्तत्वात् तस्य सर्वजगत्प्रकाशकत्वोक्तेरिति यावत् । तस्य च लिङ्गद्वयस्य **'अहं तत्तेजः'** (चतुर्वेदशिखा.) इत्यादिश्रुत्या स्मृत्या च तस्मिन् विष्णावेव निश्चयेनोपपत्तेर्ज्ञानिसुखे च **'असम्भवात्'** अनुपपत्तेः । तथा तस्मिन्नुपसंहारे तस्याऽनुकूल्येन गृह्यमाणस्य **'न तत्र सूर्यो भाति'** इति वाक्ये तस्य सूर्याद्यप्रकाश्यत्वस्य चोक्तेश्चेति सूत्रार्थ उक्तो भवति ।

## श्रीपद्मनाभतीर्थविरचितसत्तर्कदीपावळिः

### ॐ अनुकृतेस्तस्य च ॐ ॥ १-२-१३ ॥

**अदृश्यत्वादेरयमर्थः । 'तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखम्' 'कथं नु तद्विजानीयाम्' इति श्रुतौ ज्ञानिसुखस्यानिर्देश्यत्वादिकमुच्यते । अतः परमात्मैवादृश्यत्वादिगुणक इति यदुक्तं प्राक्, तन्न सिद्ध्यतीति चेत्,**

'ಅದೃಶ್ಯತ್ವಾದೇಃ' ಇತ್ಯಾದಿ ಭಾಷ್ಯದ ಅರ್ಥ ಹೀಗಿದೆ - 'ತಮಾತ್ಮಸ್ಥಂ ಯೇಽನುಪಶ್ಯಂತಿ ಧೀರಾಸ್ತೇಷಾಂ ಸುಖಮ್' 'ಕಥಂ ನು ತದ್ವಿಜಾನೀಯಾಮ್' ಇತ್ಯಾದಿ ಶ್ರುತಿಯಲ್ಲಿ ಜ್ಞಾನಿಸುಖವನ್ನು ಅನಿರ್ದೇಶ್ಯವೆಂದು ಹೇಳಲಾಗಿದೆ. ಆದ್ದರಿಂದ ಹಿಂದೆ ಪರಮಾತ್ಮನೇ ಅದೃಶ್ಯತ್ವಾದಿಗುಣಗಳುಳ್ಳವನೆಂದು ಸಾಧಿಸಿದ್ದು ಸಿದ್ಧವಾಗುವುದಿಲ್ಲವಲ್ಲವೇ? ಎಂದು ಆಕ್ಷೇಪ.

**मैवम् । 'तस्य भासा सर्वमिदं विभाति' इति वाक्यशेषाद् 'अहं तत्तेजो रश्मीन्नारायणम्' इति श्रुत्यन्तरविरोधात् । 'यदादित्यगतं तेजः' इत्यादिवाक्यविरोधात् 'तत्तेजो विद्धि मामकम्' इति मत्तेजसा प्रवर्तितमित्यर्थः ॥**

**॥ इति सत्तर्कदीपावळ्याम् अनुकृत्यधिकरणम् ॥**

ಇದು ತಪ್ಪು 'ತಸ್ಯ ಭಾಸಾ ಸರ್ವಮಿದಂ ವಿಭಾತಿ' ಎಂಬ ವಾಕ್ಯಶೇಷದಲ್ಲಿ ಮತ್ತು 'ಅಹಂ ತತ್ತೇಜೋ ರಶ್ಮೀನ್ನಾರಾಯಣಮ್' ಎಂಬ ಶ್ರುತ್ಯಂತರದಲ್ಲಿ ಪರಮಾತ್ಮನೇ ಅನಿರ್ದೇಶ್ಯಸುಖ-ಸ್ವರೂಪನೆಂದು ಹೇಳಲಾಗಿದೆ. ಅವನ ಅಧೀನವಾಗಿಯೇ ಜಗತ್ತು ಬೆಳಗುತ್ತದೆ ಎಂದು 'ಯದಾದಿತ್ಯಗತಂ ತೇಜಃ' ಇತ್ಯಾದಿ ಸ್ಮೃತಿವಾಕ್ಯಗಳಲ್ಲಿಯೂ ಹೇಳಲಾಗಿದೆ. ಒಂದು ವೇಳೆ ಜ್ಞಾನಿಸುಖವನ್ನೇ ಅನಿರ್ದೇಶ್ಯವೆಂದು ಹೇಳಿದರೆ ಈ ಎಲ್ಲಾ ಶ್ರುತಿ-ಸ್ಮೃತಿಗಳ ವಿರೋಧವು ಬರುತ್ತದೆ. ಅವನ ಸುಖವೇ ಅನಿರ್ದೇಶ್ಯವಾಗಿದೆ ಎಂದು ಸಿದ್ಧವಾಗುತ್ತದೆ.

ಆದ್ದರಿಂದ 'ತತ್ತೇಜೋ ವಿದ್ಧಿ ಮಾಮಕಮ್' ಎಂದರೆ ಪರಮಾತ್ಮನ ತೇಜಸ್ಸಿನಿಂದಲೇ ಎಲ್ಲವೂ ಬೆಳಗುತ್ತಿದೆ ಎಂದರ್ಥ.

॥ ಇಲ್ಲಿಗೆ ಸತ್ತರ್ಕದೀಪಾವಳಿ ಕನ್ನಡಾನುವಾದದಲ್ಲಿ ಅನುಕೃತ್ಯಧಿಕರಣವು ಮುಗಿಯಿತು ॥

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः॥ॐ॥

तत्वप्रकाशिका –

॥ ॐ अनुकृतेस्तस्य च ॐ ॥

अत्राऽऽनुकूल्येन गृह्यमाणत्वलिङ्गस्य भगवति ज्ञानिसुखे च सुखशब्दवृत्त्या साधारणस्य विष्णौ समन्वयप्रतिपादनादस्ति शास्त्रादिसङ्गतिः ।

श्रुत्यादिसङ्गतिं विषयादिकं च सूचयन् सयक्तिकं पूर्वपक्षं च दर्शयति – अदृश्यत्वादय इति ॥

ಈ ಅಧಿಕರಣದಲ್ಲಿ 'ಆನುಕೂಲ್ಯೇನ ಗೃಹ್ಯಮಾಣತ್ವ' ಲಿಂಗವನ್ನು ಸಮನ್ವಯ ಮಾಡಲಾಗಿದೆ. ಈ ಲಿಂಗವು ಭಗವಂತನಲ್ಲಿ ಮತ್ತು ಜ್ಞಾನಿಸುಖದಲ್ಲಿ ಸುಖಶಬ್ದದ ಇರುವಿಕೆಯಿಂದ ಉಭಯಸಾಧಾರಣವಾಗಿದೆ. ಇಂತಹ ಧರ್ಮವನ್ನು ವಿಷ್ಣುವಿನಲ್ಲಿ ಸಮನ್ವಯ ಮಾಡುತ್ತಿರುವ ಕಾರಣ ಶಾಸ್ತ್ರಾದಿಸಂಗತಿಗಳು ಇರುತ್ತವೆಂದು ತಿಳಿಯಬೇಕು.

ಶ್ರುತಿಸಂಗತಿ, ಅಧಿಕರಣಸಂಗತಿ ಇತ್ಯಾದಿಗಳನ್ನು ಸೂಚನೆ ಮಾಡುತ್ತಾ ಯುಕ್ತಿಬದ್ಧವಾದ ಪೂರ್ವಪಕ್ಷವನ್ನು ತೋರಿಸುತ್ತಾ ಇದ್ದಾರೆ 'ಅದೃಶ್ಯತ್ವಾದಿ' ಎಂಬ ಭಾಷ್ಯದಿಂದ.

तत्वप्रकाशिका – पूर्वमदृश्यत्वादिगुणाः परमेश्वरस्योक्ताः । तेषामदृश्यत्वाज्ञेयत्वे कस्यचिदानुकूल्येन गृह्यमाणस्य काठके कथ्येते ।

ಅದೃಶ್ಯತ್ವಾಧಿಕರಣದಲ್ಲಿ ಅದೃಶ್ಯತ್ವಾದಿಗುಣಗಳು ಪರಮಾತ್ಮನಲ್ಲಿರುತ್ತವೆ ಎಂದು ಸಾಧಿಸಲಾಯಿತು. ಆದರೆ ಆನುಕೂಲ್ಯೇನ ಗೃಹ್ಯಮಾಣನಾದವನಲ್ಲಿ ಇಂತಹ ಅದೃಶ್ಯತ್ವ, ಅಜ್ಞೇಯತ್ವ ಗುಣಗಳು ಇರುತ್ತವೆಂದು ಕಾಠಕೋಪನಿಷತ್ತು ಹೇಳುತ್ತಿದೆ.

तत्वप्रकाशिका – 'तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम् । कथं नु तद्विजानीयां किमु भाति न भाति वा' इति ।

'ಶಾಶ್ವತವಾದ ಸುಖವನ್ನೇ ಶಬ್ದದಿಂದ ಹೇಳಲಾಗದ ಪರಮಸುಖವೆನ್ನುತ್ತಾರೆ. ಇಂತಹ ಸುಖವನ್ನು ಜ್ಞಾನಿಗಳು ಹೇಗೆ ತಿಳಿಯಬೇಕೆಂದು ಪ್ರಾರ್ಥಿಸುತ್ತಾರೋ ಅಂತಹ ಸುಖವೇ ಅನಿರ್ದೇಶ್ಯವಾಗಿದೆ' ಎಂದು ಕಾಠಕೋಪನಿಷತ್ತು ಹೇಳಿದೆ.

**तत्वप्रकाशिका – 'आनुकूल्येन गृह्यमाणत्वं' नाम 'कथं नु तद्विजानीयामिति ज्ञानार्थं प्रार्थितत्वम्'**

'ಆನುಕೂಲ್ಯೇನ ಗೃಹ್ಯಮಾಣತ್ವಂ' ಎಂಬುದರ ಅರ್ಥ ಹೀಗಿದೆ -

'ಕಥಂ ನು ತದ್ವಿಜಾನೀಯಾಂ' ಎಂಬುದಾಗಿ ಜ್ಞಾನಕ್ಕಾಗಿ ಮಾಡುವ ಪ್ರಾರ್ಥನೆ ಎಂದು.

**तत्वप्रकाशिका – तस्य चान्यनिष्ठत्वेऽनिर्देश्यत्वं न भवतीत्युक्ताज्ञेयत्वं चान्यस्यैव प्रसज्येतेत्यवश्यं निर्णेतव्यत्वम् ।**

ಇಂತಹ ಆನುಕೂಲ್ಯೇನ ಗೃಹ್ಯಮಾಣತ್ವವು ಬೇರೆಯವರಲ್ಲಿ ಬರುವುದಾದರೆ, ಅನಿರ್ದೇಶ್ಯತ್ವ, ಅಜ್ಞೇಯತ್ವ ಮೊದಲಾದುವುಗಳು ಬೇರೆಯವರಲ್ಲೂ ಬರುತ್ತವೆ. ಆದ್ದರಿಂದ ಆನುಕೂಲ್ಯೇನ ಗೃಹ್ಯಮಾಣತ್ವಲಿಂಗವನ್ನು ಅವಶ್ಯವಾಗಿ ನಿರ್ಣಯಿಸಬೇಕು.

**तत्वप्रकाशिका – तदानुकूल्येन गृह्यमाणत्वमत्र विषयः । विष्णोरन्यस्य वेति सन्देहः । प्रागुक्तसाधारण्यं सन्देहबीजम् । ज्ञानिसुखस्य तल्लिङ्गमिति पूर्वः पक्षः ।**

ಆನುಕೂಲ್ಯೇನ ಗೃಹ್ಯಮಾಣತ್ವವೇ ಈ ಅಧಿಕರಣದ ವಿಷಯ. ಈ ಧರ್ಮವು ವಿಷ್ಣುವಿನಲ್ಲಿದೆಯೋ ಬೇರೆಯವರಲ್ಲಿ ಇದೆಯೋ? ಎಂಬುದೇ ಸಂಶಯ. ಹಿಂದೆ ಹೇಳಿದಂತೆ ಜ್ಞಾನಿಸುಖ ಮತ್ತು ಪರಮಾತ್ಮ ಇಬ್ಬರಲ್ಲಿಯೂ ಸಾಧಾರಣವಾಗಿರುವುದು ಸಂದೇಹ ಬೀಜ. ಈ ಲಿಂಗವು ಜ್ಞಾನಿಸುಖಕ್ಕೇ ಇರುತ್ತದೆಂಬುದು ಪೂರ್ವಪಕ್ಷ.

**तत्वप्रकाशिका – परमं सुखमिति सुखोक्तेः । नच सुखश्रुतिर्विष्णावपि सावकाशेति तद्ग्रहः । 'एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति । तमात्मस्थं येऽनुपश्यन्ति धीराः तेषां सुखं शाश्वतं नेतरेषाम्' इति ज्ञानिसुखस्य प्रकृतत्वात् ।**

ಏಕೆಂದರೆ ಶ್ರುತಿಯಲ್ಲಿ 'ಪರಮಂ ಸುಖಮ್' ಎಂದು ಸ್ಪಷ್ಟವಾದ ಸುಖಶಬ್ದವಿದೆ. ಇನ್ನು ಸುಖಶ್ರುತಿಯು ವಿಷ್ಣುವಿನಲ್ಲಿಯೂ ಸಾವಕಾಶವಾಗಿದೆಯಲ್ಲವೇ ? ಎಂದು ಪ್ರಶ್ನಿಸಬಾರದು. ಏಕೆಂದರೆ 'ಏಕೋ ವಶೀ ಸರ್ವಭೂತಾಂತರಾತ್ಮಾ ಏಕಂ ರೂಪಂ ಬಹುಧಾ ಯಃ ಕರೋತಿ । ತಮಾತ್ಮಸ್ಥಂ ಯೇಽನುಪಶ್ಯಂತಿ ಧೀರಾಃ ತೇಷಾಂ ಸುಖಂ ಶಾಶ್ವತಂ ನೇತರೇಷಾಂ' ಯಾವಾತನು ಸ್ವಗತಭೇದ ವಿವರ್ಜಿತನೋ, ಸಕಲ ಪದಾರ್ಥಗಳಿಗೆ ಸ್ವಾಮಿಯೋ, ಸರ್ವಭೂತಾಂತರ್ಯಾಮಿಯೋ, ತನ್ನ ಸ್ವರೂಪದಿಂದ ಅನಂತ ಪ್ರಕಾರವನ್ನೂ ಹೊಂದಿದವನೋ, ಸಕಲ ಜೀವರ ಹೃದಯಪದ್ಮದಲ್ಲಿದ್ದಾನೋ,

ಅಂತಹ ಪರಮಾತ್ಮನನ್ನು ಜ್ಞಾನಿಯಾದ ಅಧಿಕಾರಿಯು ಹೊಂದುತ್ತಾನೆ. ಅವನಿಗೆ ಶಾಶ್ವತವಾದ ಸುಖಸ್ವರೂಪವಾದ ಮೋಕ್ಷವೇ ದೊರೆಯುತ್ತದೆ. ಎಂದು ಶ್ರುತಿಯು ಹೇಳುತ್ತಿದೆ. ಇಲ್ಲಿ ಜ್ಞಾನಿಗಳ ಸುಖವೇ ಪ್ರಕೃತವಾಗಿವೆ.

**तत्वप्रकाशिका – तस्यैव 'तदेतदिति मन्यन्ते' इति परामर्शात् । नच वाच्यं भगवतोऽपि प्रकृतत्वात् तत्परामर्शोऽयमस्त्विति । तस्य नपुंसकसुखशब्देनाप्रकृतस्य तदित्यादिपरामर्शायोगात् ।**

ಮತ್ತು ಜ್ಞಾನಿಗಳ ಸುಖವನ್ನೇ 'ತದೇತದಿತಿ ಮನ್ಯಂತೇ' ಎಂಬ ವಾಕ್ಯದಲ್ಲಿ 'ತದೇತತ್' ಎಂಬುದರಿಂದ ಪರಾಮರ್ಶ ಮಾಡಲಾಗಿದೆ. ಪರಮಾತ್ಮನೂ ಕೂಡ ಇದೇ ಪ್ರಕರಣದಲ್ಲಿ ಪ್ರಕೃತನಾದ್ದರಿಂದ 'ತದೇತತ್' ಎಂಬ ಶಬ್ದದಿಂದ ಅವನನ್ನು ಪರಾಮರ್ಶ ಮಾಡಬಹುದಲ್ಲವೇ? ಎಂದು ಪ್ರಶ್ನಿಸಬಾರದು. ನಪುಂಸಕಲಿಂಗದಲ್ಲಿರುವ ಸುಖಶಬ್ದದಿಂದ ಅಪ್ರಸಕ್ತನಾದ ಪರಮಾತ್ಮನನ್ನು ಪರಾಮರ್ಶ ಮಾಡುವುದು ತಪ್ಪಾಗುತ್ತದೆ.

**तत्वप्रकाशिका – सम्भवत्समीपस्थपरामर्शं विहाय दूरस्थपरामर्शग्रहणे कारणाभावाच्च । अतो ज्ञानिसुखस्यैवाऽऽनुकूल्येन गृह्यमाणत्त्वात् तस्यैवा-निर्देश्यत्वादीत्यर्थः ।**

'ತದೇತತ್' ಎಂಬ ಶಬ್ದಕ್ಕೆ ಹತ್ತಿರದಲ್ಲೇ ಇರುವ 'ತೇಷಾಂ ಸುಖಮ್' ಎಂಬಲ್ಲಿರುವ ಸುಖಪದವನ್ನು ತ್ಯಾಗಮಾಡಿ ದೂರದಲ್ಲಿರುವ 'ಏಕೋ ವಶೀ' ಎಂಬಲ್ಲಿ ಹೇಳಿರುವ ಪರಮಾತ್ಮನ ಪರಾಮರ್ಶಮಾಡಲು ಏನೂ ಕಾರಣವಿಲ್ಲ. ಆದ್ದರಿಂದ ಜ್ಞಾನಿಸುಖವೇ ಇಲ್ಲಿ ಆನುಕೂಲ್ಯೇನ ಗೃಹ್ಯಮಾಣವಾಗಿದೆ, ಅನಿರ್ದೇಶ್ಯತ್ವಾದಿ ಧರ್ಮಗಳಿಂದಲೂ ಯುಕ್ತವಾಗಿದೆ ಎಂದು ಪೂರ್ವಪಕ್ಷ.

**तत्वप्रकाशिका – सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे – अत इति ।। 'कथं नु तद्विजानीयाम्' इत्यानुकूल्येन गृह्यमाणो विष्णुरेव । न सुखश्रुतिविरोधः ।**

ಸಿದ್ಧಾಂತವನ್ನು ಸ್ಥಾಪನೆ ಮಾಡುವ ಸೂತ್ರವನ್ನು ಪಠಿಸಿ ವ್ಯಾಖ್ಯಾನಿಸುತ್ತಿದ್ದಾರೆ 'ಅತಃ' ಇತ್ಯಾದಿಯಾಗಿ. 'ಕಥಂ ನು ತದ್ವಿಜಾನೀಯಾಮ್' ಎಂಬ ಶ್ರುತಿಯಿಂದ ಆನುಕೂಲ್ಯೇನ ಗೃಹ್ಯಮಾಣನಾಗಿರುವನೆಂದು ಹೇಳಲ್ಪಟ್ಟವನು ವಿಷ್ಣುವೇ ಆಗಿದ್ದಾನೆ. ಸುಖಶ್ರುತಿಯ ವಿರೋಧಕ್ಕೆ ಈಗ ಅವಕಾಶವಿಲ್ಲ.

**तत्वप्रकाशिका – परमं सुखमिति सुखश्रुतेरपि तत्परत्वात् । तेषां सुखमिति ज्ञानिसुखस्य प्रकृतत्वात्तस्यैव तदेतदिति परामर्शान्नेति चेन्न । 'चेतनश्चेतनानाम्' इत्यादौ परमात्मनोऽपि प्रकृतत्वात् ।**

ಏಕೆಂದರೆ 'ಪರಮಂ ಸುಖಮ್' ಎಂಬ 'ಸುಖ' ಶ್ರುತಿಯಲ್ಲಿರುವ ಸುಖ ಶಬ್ದದ ಅರ್ಥವೂ ಕೂಡ ವಿಷ್ಣುವೇ ಆಗಿದ್ದಾನೆ.

'ತೇಷಾಂ ಸುಖಂ' ಎಂಬಲ್ಲಿ ಜ್ಞಾನಿಸುಖವೇ ಪ್ರಸಕ್ತವಾದ್ದರಿಂದ ಅಂತಹ ಜ್ಞಾನಿಸುಖವನ್ನೇ 'ತದೇತತ್' ಎಂಬುದರಿಂದ ಪರಾಮರ್ಶ ಮಾಡಬೇಕಲ್ಲವೆ? ಇದು ವಿಷ್ಣುಪರವಾಗಲು ಹೇಗೆ ಸಾಧ್ಯ? ಎಂದು ಪ್ರಶ್ನಿಸಬಾರದು. 'ಚೇತನಶ್ಚೇತನಾನಾಮ್' ಇತ್ಯಾದಿ ವಾಕ್ಯದಿಂದ ಪರಮಾತ್ಮನೂ ಕೂಡಾ ಪ್ರಕೃತನೇ ಆಗಿದ್ದಾನೆ.

**तत्वप्रकाशिका – नच परमात्मनो नपुंसकसुखशब्देनाप्रकृतत्वात्तदेतदिति परामर्शायोग इति वाच्यम् ।**

ನಪುಂಸಕಲಿಂಗದಲ್ಲಿರುವ ಸುಖಶಬ್ದದಿಂದ ಪರಮಾತ್ಮನನ್ನು ಪರಾಮರ್ಶಮಾಡಿ ಪ್ರಕೃತನೆಂದು ವಿವಕ್ಷಿಸಲು ಹೇಗೆ ಸಾಧ್ಯ? ಹೀಗೆ ಅಪ್ರಕೃತನಾದ ಪರಮಾತ್ಮನನ್ನು 'ತದೇತತ್' ಎಂಬ ಸರ್ವನಾಮದಿಂದ ಪರಾಮರ್ಶ ಮಾಡಲು ಸಾಧ್ಯವಿಲ್ಲವಲ್ಲವೆ? ಎಂದು ಪ್ರಶ್ನಿಸಬಾರದು.

**तत्वप्रकाशिका – यदनिर्देश्यं परमं सुखं कथं नु तद्विजानीयामित्यानुकूल्येन गृह्णन्ति तदनिर्देश्यं सुखमेतत्प्रकृतपरमात्मनो रूपमिति मन्यन्त इति वाक्ययोजनोपपत्तेः ।**

ಯಾವುದನ್ನು ನಿರ್ದೇಶ್ಯ ಮಾಡಲು ಸಾಧ್ಯವಿಲ್ಲದ ಪರಮಸುಖವನ್ನು 'ಕಥಂ ನು ತದ್ವಿಜಾನೀಯಾಮ್' ಎಂಬುದಾಗಿ ಆನುಕೂಲ್ಯೇನ ಗ್ರಹಣ ಮಾಡಿದ್ದಾರೋ, ಆ ಅನಿರ್ದೇಶ್ಯಸುಖವೇ ಇಲ್ಲಿ ಪ್ರಸಕ್ತವಾದ ಪರಮಾತ್ಮನ ರೂಪವೆಂದು ಜ್ಞಾನಿಜನರು ತಿಳಿಯುತ್ತಾರೆ. ಹೀಗೆ ವಾಕ್ಯವನ್ನು ಯೋಜನೆ ಮಾಡಿಕೊಳ್ಳಬೇಕು.

**तत्वप्रकाशिका – नच वक्तव्यं समीस्थपरामर्शं विहाय कथञ्चिदेव दूरस्थग्रहणे कारणाभाव इति ।**

ಹತ್ತಿರದಲ್ಲೇ ಇರುವುದನ್ನು ಪರಾಮರ್ಶಮಾಡದೆ ದೂರದಲ್ಲಿರುವ ಪರಮಾತ್ಮನ ಸುಖವನ್ನು ಪರಾಮರ್ಶ ಮಾಡಲು ಏನೂ ಕಾರಣವಿಲ್ಲವಲ್ಲವೆ? ಎಂದು ಪ್ರಶ್ನಿಸಬಾರದು.

**तत्वप्रकाशिका – 'तमेव भान्तमनुभाति सर्वम्' इति वाक्यशेषे सूर्यादीनामे तदधीनप्रकाशश्रवणात् 'तस्य भासा' इति सर्वजगतः तत्प्रभाप्रकाश्यत्वप्रतीतेश्च ।**

'ತಮೇವ ಭಾಂತಮನುಭಾತಿ ಸರ್ವಮ್' ಎಂಬ ಮುಂದಿನ ವಾಕ್ಯದಲ್ಲಿ ಸೂರ್ಯಾದಿಗಳಿಗೆ ಪರಮಾತ್ಮನ ಸುಖಪ್ರಕಾಶದ ಅಧೀನವಾದ ಪ್ರಕಾಶವನ್ನು ಹೇಳಲಾಗಿದೆ. ಮತ್ತು 'ತಸ್ಯ ಭಾಸಾ' ಎಂಬ ವಾಕ್ಯದಿಂದ ಭಗವತ್‌ಪ್ರಭಾದಿಂದ ಜಗತ್‌ಪ್ರಕಾಶ್ಯತ್ವವನ್ನು ಹೇಳಲಾಗಿದೆ.

**तत्वप्रकाशिका – अतः समीपोक्तपरित्यागे कारणसद्भावेन दूरोक्तपरमात्मग्रहणोपपत्तेस्तस्य च सुखरूपत्वातिशयेन नपुंसकसुखश्रुत्युपपत्तेः विष्णुरेव आनुकूल्येन गृह्यमाण इति तस्यैव अनिर्देश्यत्वादीति भावः ।**

ಆದ್ದರಿಂದ ಸಮೀಪದಲ್ಲೇ ಪ್ರಸಕ್ತವಾದ್ದನ್ನು ಪರಿತ್ಯಾಗ ಮಾಡಲು ಕಾರಣವಿರುವುದರಿಂದ ದೂರದಲ್ಲಿರುವ ಪರಮಾತ್ಮನನ್ನು ಗ್ರಹಣಮಾಡಿದ್ದು ಸೂಕ್ತವಾಗುತ್ತದೆ. ಮತ್ತು ಪರಮಾತ್ಮನು ಅತಿಶಯವಾದ ಸುಖಸ್ವರೂಪಿಯಾದ್ದರಿಂದ ನಪುಂಸಕಲಿಂಗದಲ್ಲಿರುವ ಸುಖಶಬ್ದದಿಂದ ವಿಷ್ಣುವನ್ನು ಸ್ವೀಕರಿಸಿದರೆ ಯಾವ ತೊಂದರೆಯೂ ಇಲ್ಲ. ಆದ್ದರಿಂದ ವಿಷ್ಣುವೇ ಆನುಕೂಲ್ಯೇನ ಗೃಹ್ಯಮಾಣನಾಗಿದ್ದಾನೆ. ಅವನಲ್ಲಿಯೇ ಅದೃಶ್ಯತ್ವಾದಿ ಧರ್ಮಗಳಿವೆ ಎಂಬುದು ಭಾಷ್ಯದ ಅಭಿಪ್ರಾಯ.

**तत्वप्रकाशिका – नन्वेतदधीनतया सूर्यादीनां भानोक्तावेतस्य सर्वजगत्प्रकाशकत्वोक्तौ च कुतः समीपोक्तज्ञानिसुखपरामर्शपरित्याग इत्यत आह – न हीति ।।**

ಸೂರ್ಯಾದಿಪ್ರಕಾಶವು ಪರಮಾತ್ಮನ ಅಧೀನವಾಗಿದೆ ಮತ್ತು ಪರಮಾತ್ಮನು ಸಕಲಜಗತ್ತಿಗೆ ಪ್ರಕಾಶಕನಾಗಿದ್ದಾನೆಂದು ಶ್ರುತಿಯಲ್ಲಿ ಹೇಳಲಾಗಿದೆ. ಆದರೂಕೂಡ 'ತದೇತದಿತಿ' ವಾಕ್ಯದ ಸಮೀಪದಲ್ಲಿರುವ ಜ್ಞಾನಿಸುಖವನ್ನು ಪರಿತ್ಯಾಗ ಮಾಡಲು ಏನು ಕಾರಣ? ಎಂಬ ಪ್ರಶ್ನೆಗೆ 'ನಹಿ' ಇತ್ಯಾದಿ ಗ್ರಂಥದಿಂದ ಉತ್ತರಿಸಿದ್ದಾರೆ.

**तत्वप्रकाशिका – सर्वं सूर्यादिजगत् भातीति शेषः । अस्त्वेतदुभयं ज्ञानिसुखेऽनुपपन्नम् तथापि कुतोऽनेन परमात्मग्रहणमित्यत आह – अहमिति ।।**

'ಸರ್ವಂ ಸೂರ್ಯಾದಿಜಗತ್ ಭಾತಿ' ಸಕಲವಾದ ಸೂರ್ಯಾದಿ ಜಗತ್ತು ಪ್ರಕಾಶಮಾನವಾಗಿದೆ ಎಂಬುದನ್ನು ಇಲ್ಲಿ ಅಧ್ಯಾಹಾರ ಮಾಡಿಕೊಳ್ಳಬೇಕು. ಸೂರ್ಯಾದಿ ಪ್ರಕಾಶಕತ್ವ ಮತ್ತು ಸರ್ವಜಗತ್ತನ್ನು ಪ್ರಕಾಶಪಡಿಸುವಿಕೆ ಇವೆರಡೂ ಜ್ಞಾನಿಸುಖದಲ್ಲಿ ಅನುಪಪನ್ನವಾಗಿದೆ ಎಂದು ಒಪ್ಪೋಣ. ಆದರೂ ಕೂಡ ಈ ಧರ್ಮಗಳನ್ನು ಈಶ್ವರನಲ್ಲಿ ಸ್ವೀಕರಿಸಲು ಹೇಗೆ ಸಾಧ್ಯ ? ಎಂಬ ಪ್ರಶ್ನೆಗೆ 'ಅಹಂ' ಇತ್ಯಾದಿ ಭಾಷ್ಯದಿಂದ ಉತ್ತರಿಸಿದ್ದಾರೆ.

ಅನುಕೃತ್ಯಧಿಕರಣ (೧-೩-೬)

**तत्वप्रकाशिका – एतदुभयस्य ज्ञानिसुखेऽसम्भवात्परमात्मनि सम्भवाद् दूरोक्तस्यापि समीपोक्तपरित्यागेन ग्रहणमिति भावः ।**

ಈ ಎರಡೂ ವಿಷಯಗಳು ಜ್ಞಾನಿಸುಖದಲ್ಲಿ ಅಸಂಭಾವಿತವಾದ್ದರಿಂದ, ಪರಮಾತ್ಮನಲ್ಲಿ ಸಂಭಾವಿತವಾದ್ದರಿಂದಲೂ, ಸಮೀಪದಲ್ಲಿರುವುದನ್ನು ಪರಿತ್ಯಾಗ ಮಾಡಿ ದೂರದಲ್ಲಿರುವುದನ್ನು ಸ್ವೀಕರಿಸುವುದು ಯುಕ್ತವೇ ಆಗಿದೆ.

**तत्वप्रकाशिका – तदुक्तं 'व्यवधानेनान्वयोऽपि योग्यतापेक्षया भवत्' इति। इति श्रुतेरिति शेषः ।**

ಇದನ್ನೇ 'ವ್ಯವಧಾನೇನಾನ್ವಯೋಽಪಿ ಯೋಗ್ಯತಾಪೇಕ್ಷಯಾ ಭವೇತ್' ವ್ಯವಹಿತವಾಗಿದ್ದರೂ ಕೂಡ ಯೋಗ್ಯವಾದುದ್ದನ್ನು ಅನ್ವಯ ಮಾಡಬೇಕೆಂದು ಹೇಳಿದ್ದಾರೆ. 'ಇತಿ' ಎಂಬುದರ ನಂತರ, 'ಶ್ರುತೇಃ' ಎಂಬುದನ್ನು ಶೇಷಪೂರಣ ಮಾಡಿಕೊಳ್ಳಬೇಕು.

**तत्वप्रकाशिका – रश्मीदिति सूर्यादितेजसां नारायणाधीनत्वमुच्यते । तेज इति सर्वजगत्प्रकाशकत्वम् । नारायणभासा तदधीनभासा तदीयभासा च सर्वं सूर्यादिजगच्च भाति प्रकाशते प्रकाश्यते च ।।**

'ರಶ್ಮೀತ್' ಈ ಶಬ್ದದಿಂದ ಸೂರ್ಯಾದಿಗಳ ದಿವ್ಯವಾದ ತೇಜಸ್ಸು ಭಗವಂತನ ಅಧೀನವಾಗಿದೆ ಎಂದು ಹೇಳಲಾಗಿದೆ. ತೇಜಸ್ಸೆಂದರೆ ಸಕಲಜಗತ್‌ಪ್ರಕಾಶಕತ್ವ ಎಂದರ್ಥ. 'ನಾರಾಯಣಭಾಸಾ' ಎಂದರೆ ಪರಮಾತ್ಮನ ಅಧೀನವಾದ ಸಕಲ ತೇಜಸ್ಸಿನಿಂದ ಅಥವಾ ನಾರಾಯಣನ ತೇಜಸ್ಸಿನಿಂದ, ಸರ್ವಂ = ಎಂದರೆ ಸಕಲ ಸೂರ್ಯಾದಿಜಗತ್ತು 'ಭಾತಿ' ಎಂದರೆ ಪ್ರಕಾಶಿತವಾಗುತ್ತದೆ, ಹಾಗೂ ಮತ್ತೊಂದನ್ನು ಪ್ರಕಾಶ ಮಾಡುತ್ತದೆ, ಇಷ್ಟು ಈ ಸೂತ್ರದ ಅಭಿಪ್ರಾಯ.

**भावदीपः –**

**ॐ अनुकृतेस्तस्य च ॐ ।।**

अत्र न्यायविवरणे 'कथं नु तद् विजानीयाम्' इत्यानुकूल्येन ग्रहणं कस्येति विचार्यमित्युक्तम् । तत्र पूर्वस्माल्लिङ्गं साधारणमिति पदानुवृत्तिं सूचयन् आनुकूल्येन ग्रहणं कस्येत्युक्त्यैव लब्धसाधारण्यं व्यनक्ति – अत्रानुकूल्येनेति ।।

'ಓಂ ಅನುಕೃತೇಸ್ತಸ್ಯ ಚ ಓಂ' ಎಂಬುದಾಗಿ ಅನುಕೃತ್ಯಧಿಕರಣವು ಪ್ರಾರಂಭವಾಗುತ್ತಿದೆ. ಈ ಅಧಿಕರಣದ ನ್ಯಾಯವಿವರಣದಲ್ಲಿ 'ಕಥಂ ನು ತದ್‌ವಿಜಾನೀಯಾಮ್ ಇತ್ಯಾನುಕೂಲ್ಯೇನ ಗ್ರಹಣಂ ಕಸ್ಯೇತಿ ವಿಚಾರ್ಯಮ್' 'ಕಥಂ ನು ತದ್‌ವಿಜಾನೀಯಾಮ್' ಎಂಬಲ್ಲಿ ಆನುಕೂಲ್ಯೇನ ಸ್ವೀಕರಿಸಲು ಅರ್ಹನಾದವನು ಯಾರು ? ಎಂದು ವಿಚಾರ ಮಾಡಲಾಗಿದೆ' ಎಂದು ಹೇಳಿದ್ದಾರೆ. ನ್ಯಾಯವಿವರಣದ ಈ ವಾಕ್ಯದಲ್ಲಿ ಹಿಂದಿನ 'ಲಿಂಗಂ ಸಾಧಾರಣಮ್' ಎಂಬ ಪದಗಳನ್ನು ಅನುವೃತ್ತಿ ಮಾಡಿಕೊಳ್ಳಬೇಕೆಂದು ಸೂಚಿಸುತ್ತಾ 'ಆನುಕೂಲ್ಯೇನ ಗ್ರಹಣಂ ಕಸ್ಯ' ಎಂದು ಹೇಳಿದ್ದರಿಂದಲೇ ಉಭಯಸಾಧಾರಣ್ಯವನ್ನು ಹೇಳಿದಂತಾಯಿತೆಂದು ವ್ಯಾಖ್ಯಾನ ಮಾಡುತ್ತಿದ್ದಾರೆ 'ಅತ್ರ ಆನುಕೂಲ್ಯೇನ' ಇತ್ಯಾದಿ ಟೀಕೆಯಿಂದ.

**भावदीपः –** भगवति ज्ञानिसुखे च साधारणस्येत्यन्वयः । सुखे तावदुक्तलिङ्गं प्रसिद्धमेव । अनुकूलवेदनीयत्वं सुखत्वमिति सर्वसिद्धत्वात् । भगवतोऽपि ज्ञानिनं प्रति 'प्रियो हि ज्ञानिनोऽत्यर्थमहम्' इत्युक्तनिरुपाधीष्टत्वात् ।

ಭಗವಂತನಲ್ಲಿ ಮತ್ತು ಜ್ಞಾನಿಸುಖದಲ್ಲಿ ಆನುಕೂಲ್ಯೇನ ಗೃಹ್ಯಮಾಣತ್ವವು ಸಾಧಾರಣವಾಗಿದೆಯೆಂದು ಅನ್ವಯ ಮಾಡಿಕೊಳ್ಳಬೇಕು. ಸುಖದಲ್ಲಾದರೂ ಈ ಆನುಕೂಲ್ಯೇನ ಗೃಹ್ಯಮಾಣತ್ವವು ಪ್ರಸಿದ್ಧವೇ ಆಗಿದೆ. ಏಕೆಂದರೆ ಇದು ನನಗೆ ಇಷ್ಟ ಎಂಬ ತಿಳುವಳಿಕೆಯು ಸುಖದಲ್ಲಿರುವುದು ಸರ್ವಸಿದ್ಧವಾದ ವಿಚಾರ. ಇದರಂತೆ ಭಗವಂತನೂ ಕೂಡ 'ಪ್ರಿಯೋ ಹಿ ಜ್ಞಾನಿನೋಽತ್ಯರ್ಥಮಹಮ್ ಸಚ ಮಮ ಪ್ರಿಯಃ' ಎಂಬ ಗೀತೆಯ ವಾಣಿಯಂತೆ ಜ್ಞಾನಿಜನರಿಗೆ ನಿರುಪಾಧಿಕನಾಗಿ ಇಷ್ಟನೇ ಆಗಿದ್ದಾನೆ.

**भावदीपः –** ज्ञानिनं प्रति स्वसुख इव भगवत्यपि तल्लिङ्गं सिद्धमिति भगवति ज्ञानिसुखे च साधारणस्येत्युक्तम् । परमात्मैवानिर्देश्यसुखरूप इति भाष्योक्तिसूचितं साधारण्यमाह – **सुखशब्दवृत्त्येति** ।।

ಜ್ಞಾನಿಜನರನ್ನು ಕುರಿತು ತಮ್ಮ ಸುಖದಲ್ಲಿ ಅನುಕೂಲವೇದನೀಯತ್ವವು ಹೇಗೆ ಇದೆಯೋ, ಅದರಂತೆ ಜ್ಞಾನಿಜನರಿಗೆ ಭಗವಂತನು ಅನುಕೂಲವೇದನೀಯನಾದ್ದರಿಂದ ಸ್ವಸುಖದಲ್ಲಿ ಮತ್ತು ಭಗವಂತನಲ್ಲಿ ಈ ಅನುಕೂಲವೇದನೀಯತ್ವ ಎಂಬ ಲಿಂಗವು ಸಾಧಾರಣವಾಗಿದೆಯೆಂದು ತಿಳಿಯಬೇಕು. 'ಪರಮಾತ್ಮೈವ ಅನಿರ್ದೇಶ್ಯಸುಖರೂಪಃ' ಪರಮಾತ್ಮನೇ ಅನಿರ್ದೇಶ್ಯಸುಖಸ್ವರೂಪನಾಗಿದ್ದಾನೆಂಬ ಭಾಷ್ಯದ ಮಾತಿನಿಂದ ಸೂಚಿತವಾದ ಸಾಧಾರಣ್ಯವನ್ನು 'ಸುಖಶಬ್ದವೃತ್ತ್ಯಾ' ಎಂಬ ಟೀಕೆಯಿಂದ ಹೇಳುತ್ತಿದ್ದಾರೆ.

**भावदीपः –** प्राक्तनचशब्दोऽत्राप्यन्वेति । 'परमं सुखम्' इत्युक्तसुखशब्दस्य 'तेषां सुखं शाश्वतम्' इति पूर्वत्र ज्ञानिसुखे 'यो वै भूमा तत्सुखम्' इति भगवति च प्रयोगेण चेत्यर्थः ।

ಹಿಂದಿರುವ 'ಚ'ಶಬ್ದವನ್ನು ಇಲ್ಲಿಯೂ ಅನ್ವಯ ಮಾಡಿಕೊಳ್ಳಬೇಕು. 'ಪರಮಂ ಸುಖಮ್' ಎಂಬಲ್ಲಿರುವ ಸುಖಶಬ್ದವು 'ತೇಷಾಂ ಸುಖಂ ಶಾಶ್ವತಮ್' ಎಂಬುದಾಗಿ ಹಿಂದೆ ಪ್ರಸಕ್ತವಾದ ಜ್ಞಾನಿ-

ಸುಖದಲ್ಲಿ ಪ್ರಸಿದ್ಧವಾಗಿದೆ. ಮತ್ತು 'ಯೋ ವೈ ಭೂಮಾ ತತ್‌ಸುಖಮ್' ಎಂಬಲ್ಲಿ ಭಗವಂತನಲ್ಲಿಯೂ ಪ್ರಸಿದ್ಧವಾಗಿದೆ.

**भावदीपः** – भाष्यं सङ्गतिपरत्वेन तावद् व्याचष्टे – **पूर्वमिति** ।। अदृश्यत्वनये ।। **तेषामदृश्यत्वाज्ञेयत्वे इति** ।। तेषां मध्ये अद्रेश्याग्राह्यपदोक्ते इत्यर्थः ।

ಭಾಷ್ಯವನ್ನು ಸಂಗತಿಪರವಾಗಿ ವ್ಯಾಖ್ಯಾನ ಮಾಡುತ್ತಿದ್ದಾರೆ 'ಪೂರ್ವಮ್' ಇತ್ಯಾದಿ ಟೀಕೆಯಿಂದ. 'ಪೂರ್ವಮ್' ಎಂದರೆ ಅದೃಶ್ಯತ್ವಾಧಿಕರಣದಲ್ಲಿ ಎಂದರ್ಥ. 'ತೇಷಾಮದೃಶ್ಯತ್ವಾಜ್ಞೇಯತ್ವೇ' ಎಂದರೆ ಅವುಗಳ ಮಧ್ಯದಲ್ಲಿ ಅದ್ರೇಶ್ಯ ಮತ್ತು ಅಗ್ರಾಹ್ಯಪದಗಳಿಂದ ಹೇಳಲ್ಪಟ್ಟ ಎಂದರ್ಥ.

**भावदीपः** – ज्ञानिसुखस्योच्यत इत्यस्यार्थः – **कस्यचिदिति** ।। केनेत्यतः तदेतदिति पूर्वभाष्यमिति मत्वाऽह – **तदेतदिति** ।। भाष्ये पर्वपक्षयुक्तिसूचनाय एकदेशमात्रोक्तावपि आदिपदोपात्तलिङ्गार्पकांशमाह – **कथन्नु तदिति** ।। पूर्वार्धेनानिर्देश्यत्वस्य उत्तरार्धेन न भातीत्यज्ञेयत्वस्य चोक्तेरिति भावः ।

'ಜ್ಞಾನಿಸುಖಸ್ಯೋಚ್ಯತೇ' ಎಂಬುದರ ಅರ್ಥವನ್ನು 'ಕಸ್ಯಚಿತ್' ಇತ್ಯಾದಿಯಾಗಿ ಹೇಳುತ್ತಿದ್ದಾರೆ. ಎಲ್ಲಿ ಹೇಳಿದ್ದಾರೆ? ಎಂಬ ಪ್ರಶ್ನೆಗೆ 'ತದೇತತ್' ಎಂಬ ಪೂರ್ವಭಾಷ್ಯವನ್ನು ಉಲ್ಲೇಖ ಮಾಡಿ ವ್ಯಾಖ್ಯಾನ ಮಾಡುತ್ತಿದ್ದಾರೆ 'ತದೇತತ್' ಇತ್ಯಾದಿಯಾಗಿ. ಭಾಷ್ಯದಲ್ಲಿ ಪೂರ್ವಪಕ್ಷಯುಕ್ತಿಯನ್ನು ಸೂಚನೆ ಮಾಡುವುದಕ್ಕಾಗಿ ಶ್ರುತಿಯ ಏಕದೇಶವನ್ನಷ್ಟೇ ಹೇಳಿದ್ದರೂ ಆದಿಪದದಿಂದ ತಿಳಿಯಲ್ಪಟ್ಟ ಲಿಂಗವನ್ನು ತಿಳಿಸುವಂತಹ ಉಳಿದ ಶ್ರುತಿಯನ್ನು ಉಲ್ಲೇಖ ಮಾಡುತ್ತಿದ್ದಾರೆ 'ಕಥಂನು ತತ್' ಇತ್ಯಾದಿಯಾಗಿ. ಪೂರ್ವಾರ್ಧದಿಂದ ಅನಿರ್ದೇಶ್ಯತ್ವವು ಉತ್ತರಾರ್ಧದಿಂದ 'ನ ಭಾತಿ' ಎಂಬುದಾಗಿ ಅಜ್ಞೇಯತ್ವವು ಶ್ರುತಿಯಲ್ಲಿ ಹೇಳಿದೆಯೆಂದು ಅಭಿಪ್ರಾಯ.

**भावदीपः** – अत्र भाष्ये परमात्मैवानिर्देश्यसुखरूप इत्युक्त्याऽनुकूल्येन गृह्यमाणत्वं सुखत्वरूपलिङ्गमिति भाति । तथात्त्वे न्यायविवरणे 'कथं नु तद् विजानीयाम्' इत्यानुकूल्येन ग्रहणमित्युक्तिर्न युक्ता । तद्वाक्ये सुखत्वलिङ्गाप्रतीतेरित्यतो लिङ्गस्वरूपं विविच्याऽह – **आनुकूल्येनेति** ।।

ಭಾಷ್ಯದಲ್ಲಿ ಪರಮಾತ್ಮನು ಅನಿರ್ದೇಶ್ಯಸುಖರೂಪನೆಂದು ಹೇಳಿದ್ದರಿಂದ ಆನುಕೂಲ್ಯೇನ ಗೃಹ್ಯಮಾಣತ್ವವು ಸುಖತ್ವರೂಪವಾದ ಲಿಂಗವೆಂದೆನಿಸುತ್ತದೆ. ಹಾಗಾದಲ್ಲಿ ನ್ಯಾಯವಿವರಣದಲ್ಲಿ ಹೇಳಲ್ಪಟ್ಟ 'ಕಥಂ ನು ತದ್ವಿಜಾನೀಯಾಮ್' ಎಂಬ ಆನುಕೂಲ್ಯೇನ ಗ್ರಹಣವು ಯುಕ್ತವಾಗುವುದಿಲ್ಲ. ಏಕೆಂದರೆ ಈ

ವಾಕ್ಯದಲ್ಲಿ ಸುಖತ್ವವೆಂಬ ಲಿಂಗ ಪ್ರತೀತವಾಗುತ್ತಿಲ್ಲವಲ್ಲವೇ? ಎಂಬ ಪ್ರಶ್ನೆಗೆ ಲಿಂಗಸ್ವರೂಪವನ್ನೇ ಸ್ಪಷ್ಟಪಡಿಸುತ್ತಿದ್ದಾರೆ 'ಆನುಕೂಲ್ಯೇನ' ಇತ್ಯಾದಿ ಟೀಕೆಯಿಂದ.

**भावदीपः** – 'विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्' इति स्मरणात् । विजानीयामिति लिङ्ज्ञानार्थं ज्ञेयस्य प्रार्थनाप्रतीतेरिति वा । कथं पुत्रं पश्येयम् आयाति न वेत्यत्र दर्शनार्थं पुत्रागमनप्रार्थनप्रतीतेरिव कथं न्विति वाक्ये ज्ञानार्थमाविर्भावरूपभानप्रार्थनप्रतीतेरिति वाऽभिप्रायः । सुखरूप इति भाष्यं तु फलितोक्तिपरमिति भावः ।

ಶ್ರುತಿಯಲ್ಲಿ ವಿಜಾನೀಯಾಮ್ ಎಂಬುದಾಗಿ ಲಿಙ್‌ಪ್ರಯೋಗವಿದೆ. 'ವಿಧಿನಿಮಂತ್ರಣಾಮಂತ್ರಣಾಧೀಷ್ಟ-ಸಂಪ್ರಶ್ನಪ್ರಾರ್ಥನೇಷು ಲಿಙ್' ಎಂಬ ಪಾಣಿನೀಸೂತ್ರದಂತೆ ಪ್ರಾರ್ಥನಾ ಎಂಬರ್ಥದಲ್ಲಿ 'ಲಿಙ್' ಪ್ರತ್ಯಯವನ್ನು ತಿಳಿಯಬೇಕು. ಅಥವಾ 'ವಿಜಾನೀಯಾಮ್' ಎಂಬ 'ಲಿಙ್' ಪ್ರತ್ಯಯದಿಂದ ಜ್ಞಾನಕ್ಕೋಸ್ಕರ ಜ್ಞೇಯವಸ್ತುವಿನ ಪ್ರಾರ್ಥನೆಯನ್ನೂ ಕೂಡ ತಿಳಿಯಬಹುದು. ನನ್ನ ಮಗನನ್ನು ಯಾವಾಗ ನೋಡುತ್ತೇನೆ, ಅವನು ಬರುತ್ತಾನೋ ಇಲ್ಲವೋ ಎಂಬುದಾಗಿ, ಮಗನ ದರ್ಶನಕ್ಕೋಸ್ಕರ ಅವನ ಆಗಮನದ ಪ್ರಾರ್ಥನೆಯು ಹೇಗೆ ವಿವಕ್ಷಿತವಾಗಿರುತ್ತದೋ, ಅದರಂತೆ 'ಕಥಂ ನು ತತ್' ಎಂಬ ವಾಕ್ಯದಲ್ಲಿ ಜ್ಞಾನಕ್ಕೋಸ್ಕರ ಆವಿರ್ಭಾವರೂಪವಾದ ಜ್ಞಾನದ ಪ್ರಾರ್ಥನೆಯು ಪ್ರತೀತವಾಗಿದೆಯೆಂದು ಅಭಿಪ್ರಾಯ. 'ಸುಖರೂಪಃ' ಎಂಬ ಭಾಷ್ಯವಾದರೂ ಫಲವನ್ನು ಹೇಳುವುದಕ್ಕಾಗಿ ಎಂದು ತಿಳಿಯಬೇಕು.

**भावदीपः** – तेषां सुखमित्यादेर्भावमाह – तस्य चेति ।। प्रकृतज्ञानिसुखवाचिसुखश्रुत्या ज्ञानिसुखनिष्ठत्व इत्यर्थः । ज्ञानिसुखस्या-निर्देश्यत्वमज्ञेयत्वं चोच्यत इत्यस्य भावमाह – अनिर्देश्यत्वमिति ।।

'ತೇಷಾಂ ಸುಖಮ್' ಇತ್ಯಾದಿ ವಾಕ್ಯದ ಅಭಿಪ್ರಾಯವನ್ನು 'ತಸ್ಯ ಚ' ಇತ್ಯಾದಿ ಟೀಕೆಯಿಂದ ಸ್ಪಷ್ಟಪಡಿಸುತ್ತಿದ್ದಾರೆ. ಜ್ಞಾನಿಸುಖವನ್ನು ಪ್ರತಿಪಾದನೆ ಮಾಡುವ ಸುಖಶ್ರುತಿಯಿಂದ, ಪ್ರಕೃತ ಜ್ಞಾನಿಸುಖ ಪ್ರತಿಪಾದಕವಾದ ಶ್ರುತಿಯು ಜ್ಞಾನಿಸುಖವನ್ನೇ ಪ್ರತಿಪಾದನೆ ಮಾಡುವುದಾದರೆ ಎಂದರ್ಥ. ಜ್ಞಾನಿಸುಖಕ್ಕೆ ಅನಿರ್ದೇಶ್ಯತ್ವ ಹಾಗೂ ಅಜ್ಞೇಯತ್ವಗಳು ಹೇಳಲ್ಪಟ್ಟಿವೆ ಎಂಬುದರ ಅಭಿಪ್ರಾಯವನ್ನು 'ಅನಿರ್ದೇಶ್ಯತ್ವಮ್' ಎಂಬುದರಿಂದ ಸ್ಪಷ್ಟಪಡಿಸಿದ್ದಾರೆ.

**भावदीपः** – प्राग् विष्णुधर्मतयोक्तमिति योज्यम् । इत्यवश्येत्युक्तार्थम् । निर्णेतव्यत्वम् । आनुकूल्येन गृह्यमाणस्येत्यनुषङ्गः । पूर्वपक्षादिपरत्वेनापि व्याकुर्वन् ज्ञानिसुखस्येत्येतत्प्रतिज्ञापरत्वेन व्याचष्टे – ज्ञानिसुखस्यैतल्लिङ्गमिति ।।

'ಹಿಂದೆ ವಿಷ್ಣುವಿನ ಧರ್ಮವೆಂದು ಹೇಳಲ್ಪಟ್ಟ' ಎಂಬುದನ್ನು ಯೋಜನೆ ಮಾಡಿಕೊಂಡು 'ಅನಿರ್ದೇಶ್ಯತ್ವಮ್' ಎಂಬುದರ ಅರ್ಥವನ್ನು ತಿಳಿಯಬೇಕು. 'ಇತ್ಯವಶ್ಯಂ' ಎಂಬುದು ಹಿಂದೆ ಹೇಳಿದ್ದರ ಸಮರ್ಥನೆಗಾಗಿ. 'ನಿರ್ಣೇತವ್ಯತ್ವಮ್' ಎಂಬಲ್ಲಿ 'ಆನುಕೂಲ್ಯೇನ ಗೃಹ್ಯಮಾಣಸ್ಯ' ಎಂಬುದನ್ನು ಅನುಷಂಗ ಮಾಡಿಕೊಳ್ಳಬೇಕು. ಪೂರ್ವಪಕ್ಷಾದಿಪರವಾಗಿ ವ್ಯಾಖ್ಯಾನ ಮಾಡುತ್ತಾ 'ಜ್ಞಾನಿಸುಖಸ್ಯ' ಎಂಬುದು ಪ್ರತಿಜ್ಞಾ ರೂಪವಾಗಿದೆಯೆಂದು ಸಮರ್ಥಿಸುತ್ತಿದ್ದಾರೆ 'ಜ್ಞಾನಿಸುಖಸ್ಯ' ಇತ್ಯಾದಿ ಟೀಕೆಯಿಂದ.

**भावदीपः** – 'कथं नु तद्' इति वाक्योक्तमानुकूल्येन गृह्यमाणत्वरूपमित्यर्थः । अनिर्देश्यमित्यादिपूर्वभाष्यलब्धं हेतुमाह – **परमं सुखमितीति** ।। तस्यैव च कथं नु तदिति तच्छब्देन परामर्शादिति भावः ।

'ಕಥಂ ನು ತತ್' ಎಂಬ ವಾಕ್ಯದಲ್ಲಿ ಆನುಕೂಲ್ಯೇನ ಗೃಹ್ಯಮಾಣತ್ವವೆಂಬ ಲಿಂಗವು ಹೇಳಲ್ಪಟ್ಟಿದೆ ಎಂದರ್ಥ. 'ಅನಿರ್ದೇಶ್ಯಮ್' ಇತ್ಯಾದಿ ಹಿಂದಿನ ಭಾಷ್ಯದಿಂದ ಲಬ್ಧವಾದ ಹೇತುವನ್ನು 'ಪರಮಂ ಸುಖಮ್' ಎಂದು ಹೇಳಿದ್ದಾರೆ. ಅಂತಹ ಜ್ಞಾನಿಸುಖವನ್ನೇ 'ಕಥಂ ನು ತತ್' ಎಂಬ 'ತತ್' ಶಬ್ದದಿಂದ ಪರಾಮರ್ಶಿಸಬೇಕೆಂದು ಅಭಿಪ್ರಾಯ.

**भावदीपः** – 'तदेतदिति मन्यन्ते कथं नु तद् विजानीयाम्' इति 'तेषां सुखं शाश्वतम्' इत्युक्तज्ञानिसुखग्रहणमिति विपरीतश्रुतिभ्रम इत्यन्यत्रोक्तरीत्या सुखश्रुतेर्निरवकाशत्वाय तद्विशेषणभूततदादिसर्वनामश्रुतेर्निरवकाशत्वोक्तिपरतया तेषामित्यादिभाष्यं शङ्कापूर्वं व्याचष्टे – **नचेति** ।।

'ತದೇತದಿತಿ ಮನ್ಯಂತೇ ಕಥಂ ನು ತದ್ ವಿಜಾನೀಯಾಮ್' 'ತೇಷಾಂ ಸುಖಂ ಶಾಶ್ವತಮ್' ಎಂಬಲ್ಲಿ ಜ್ಞಾನಿಸುಖದ ಗ್ರಹಣವು ವಿವಕ್ಷಿತವಾಗಿದೆ. 'ವಿಪರೀತಶ್ರುತಿಭ್ರಮಃ' ಎಂಬುದಾಗಿ ಬೇರೆ ಕಡೆ ಹೇಳಲ್ಪಟ್ಟ ಸುಖಶ್ರುತಿಗೆ ನಿರವಕಾಶತ್ವವನ್ನು ಸಮರ್ಥನೆ ಮಾಡುವುದಕ್ಕಾಗಿ, ಅದಕ್ಕೆ ವಿಶೇಷಣಭೂತವಾದ 'ತತ್' ಮೊದಲಾದ ಸರ್ವನಾಮಶ್ರುತಿಗಳಿಗೆ ನಿರವಕಾಶತ್ವವನ್ನು ಸಮರ್ಥನೆ ಮಾಡುವುದಕ್ಕಾಗಿ ತೇಷಾಮ್' ಇತ್ಯಾದಿ ಭಾಷ್ಯವನ್ನು ಶಂಕಾಪೂರ್ವಕವಾಗಿ ವ್ಯಾಖ್ಯಾನ ಮಾಡುತ್ತಿದ್ದಾರೆ 'ನಚ' ಇತ್ಯಾದಿ ಗ್ರಂಥದಿಂದ.

**भावदीपः** – 'सुखविशिष्टा' इति सूत्रे 'लक्षणं परमानन्दः' इत्युक्तदिशा वा 'भूमा सम्प्रसादाद्' इत्यत्रोक्तदिशा 'यो वै भूमा तत्सुखम्' इत्युक्त्या वेति भावः ।

'ಸುಖವಿಶಿಷ್ಟ' ಇತ್ಯಾದಿ ಸೂತ್ರದಲ್ಲಿ 'ಲಕ್ಷಣಂ ಪರಮಾನಂದಃ' ಎಂಬುದಾಗಿ ಹೇಳಿದಂತೆ, ಅಥವಾ 'ಭೂಮಾ ಸಂಪ್ರಸಾದಾತ್' ಎಂಬಲ್ಲಿ ಹೇಳಿದಂತೆ, ಅಥವಾ 'ಯೋ ವೈ ಭೂಮಾ ತತ್‌ಸುಖಮ್' ಎಂಬಲ್ಲಿ ಹೇಳಿದಂತೆ ಎಂದು ತಿಳಿಯಬೇಕು.

ಪರಿಪೂರ್ಣಚಂದ್ರಿಕಾ

**भावदीपः** – तेषामिति तच्छब्दार्थसूचनाय एको वशीति त्रिपाद्युक्तिः । आत्मस्थं स्वस्थितम् । तदिति प्रातिपदिकश्रुतेः सावकाशत्वमाशङ्क्य नपुंसकलिङ्गेन तस्या निरवकाशत्वमाह – **नचेति** ।।

'ತೇಷಾಮ್' ಎಂಬಲ್ಲಿರುವ 'ತತ್' ಶಬ್ದದ ಅರ್ಥವನ್ನು ಸೂಚನೆ ಮಾಡುವುದಕ್ಕಾಗಿ 'ಏಕೋ ವಶೀ' ಎಂಬ ಉಳಿದ ಮೂರು ಪಾದಗಳನ್ನು ಹೇಳಿರುತ್ತಾರೆ. 'ಆತ್ಮಸ್ಥಂ' ಎಂದರೆ ತನ್ನಲ್ಲಿರುವ ಎಂದರ್ಥ. ತತ್' ಎಂಬ ಪ್ರಾತಿಪದಿಕಶ್ರುತಿಗೆ ಸಾವಕಾಶತ್ವವನ್ನು ಆಶಂಕೆ ಮಾಡಿ, ನಪುಂಸಕಲಿಂಗದಿಂದ ಅಂತಹ ಶ್ರುತಿಗೆ ನಿರವಕಾಶತ್ವವನ್ನು ಸಮರ್ಥಿಸುತ್ತಿದ್ದಾರೆ 'ನಚ' ಇತ್ಯಾದಿ ಗ್ರಂಥದಿಂದ.

**भावदीपः** – तथाच तस्यैवेत्ययुक्तमिति भावः ।। **प्रकृतत्वादिति** ।। तत्रैवं मन्त्रे । 'एको वशी' इति प्रकृतत्वादित्यर्थः ।

ಆದ್ದರಿಂದಲೇ 'ತಸ್ಯೈವ' ಇತ್ಯಾದಿಯಾಗಿ ಹೇಳಿದ್ದು ಅಯುಕ್ತವೆಂದು ತಿಳಿಯಬೇಕು. 'ಪ್ರಕೃತತ್ವಾತ್' ಎಂದರೆ ಅದೇ ಮಂತ್ರದಲ್ಲಿ 'ಏಕೋ ವಶೀ' ಎಂಬುದಾಗಿ ಪ್ರಕೃತವಾದ್ದರಿಂದ ಎಂದರ್ಥ.

**भावदीपः** – ननु पूर्वत्र 'एष आत्मा' इत्यत्र एतच्छब्दस्य पूर्वोक्तज्योतिःपरत्वेऽपि विधेयात्मापेक्षया पुल्लिङ्गत्ववदिहापि विधेयसुखापेक्षया नपुंसकत्वमस्त्वित्याशङ्कानिरासायोक्तं तदित्यादीत्यादिपदम् । तदेतच्छब्दयोरेकस्य तथात्वेऽप्येकस्योद्देशकत्वावश्यम्भावेन द्वयोर्नपुंसकत्वायोगादित्यर्थः । अङ्गीकृत्य चेदमुदितम् । वस्तुतस्तु तदिति प्रातिपदिकश्रुतिरेव स्वतो निरवकाशेति भावेनाह – **सम्भवदिति**

ಹಿಂದೆ 'ಏಷ ಆತ್ಮಾ' ಎಂಬಲ್ಲಿರುವ 'ಏತತ್' ಶಬ್ದದಿಂದ ಪೂರ್ವೋಕ್ತವಾದ ಜ್ಯೋತಿಸ್ಸನ್ನು ಪರಾಮರ್ಶ ಮಾಡಿದರೂ ವಿಧೇಯವಾದ ಆತ್ಮಶಬ್ದದ ಅಪೇಕ್ಷೆಯಿಂದ ಪುಲ್ಲಿಂಗದಲ್ಲಿರುವಂತೆ ಇಲ್ಲಿಯೂ ಸಹ ವಿಧೇಯವಾದ ಸುಖದ ಅಪೇಕ್ಷೆಯಿಂದ ನಪುಂಸಕಲಿಂಗವನ್ನು ಹೇಳಬಹುದಲ್ಲವೇ? ಎಂಬ ಆಶಂಕೆಯನ್ನು ಪರಿಹಾರ ಮಾಡುವುದಕ್ಕಾಗಿ 'ತದಿತ್ಯಾದಿ' ಎಂಬಲ್ಲಿ ಆದಿಪದವನ್ನು ಹೇಳಿರುತ್ತಾರೆ. 'ತದೇತತ್' ಶಬ್ದಗಳಲ್ಲಿ ಒಂದಕ್ಕೆ ನಪುಂಸಕಲಿಂಗತ್ವವನ್ನು ಕೂಡಿಸಬಹುದಾದರೂ ಎರಡೂ ಪದಗಳಿಗೆ ನಪುಂಸಕಲಿಂಗವನ್ನು ಕೂಡಿಸಲು ಸಾಧ್ಯವಿಲ್ಲ. ಈ ವಿಷಯವನ್ನು ಅಂಗೀಕಾರ ಮಾಡಿ ಹೇಳಿದ್ದು, ವಾಸ್ತವಿಕವಾಗಿ 'ತತ್' ಇತ್ಯಾದಿ ಪ್ರಾತಿಪದಿಕಶ್ರುತಿಯೇ ಸ್ವತಃ ನಿರವಕಾಶವಾಗಿದೆ ಎಂಬ ಅಭಿಪ್ರಾಯದಿಂದ, 'ಸಂಭವಾತ್' ಇತ್ಯಾದಿ ಟೀಕೆಯೂ ಹೊರಟಿದೆ.

**भावदीपः** – **दूरस्थेति** ।। ज्ञानिसुखेन व्यवहितेत्यर्थः । अन्यथा पूर्वत्रापि 'तस्मिन् यदन्तः' इत्यत्राप्याकाशपरामर्शित्वं तच्छब्दस्य न स्यात् । व्यवहितपुण्डरीकपरत्वमेव स्यादिति भावः ।।

ಅನುಕೃತ್ಯಧಿಕರಣ (೧-೩-೬)

'ಹಿಂದೆ ವಿಷ್ಣುವಿನ ಧರ್ಮವೆಂದು ಹೇಳಲ್ಪಟ್ಟ' ಎಂಬುದನ್ನು ಯೋಜನೆ ಮಾಡಿಕೊಂಡು 'ಅನಿರ್ದೇಶ್ಯತ್ವಮ್' ಎಂಬುದರ ಅರ್ಥವನ್ನು ತಿಳಿಯಬೇಕು. 'ಇತ್ಯವಶ್ಯಂ' ಎಂಬುದು ಹಿಂದೆ ಹೇಳಿದ್ದರ ಸಮರ್ಥನೆಗಾಗಿ. 'ನಿರ್ಣೀತವ್ಯತ್ವಮ್' ಎಂಬಲ್ಲಿ 'ಆನುಕೂಲ್ಯೇನ ಗೃಹ್ಯಮಾಣಸ್ಯ' ಎಂಬುದನ್ನು ಅನುಷಂಗ ಮಾಡಿಕೊಳ್ಳಬೇಕು. ಪೂರ್ವಪಕ್ಷಾದಿಪರವಾಗಿ ವ್ಯಾಖ್ಯಾನ ಮಾಡುತ್ತಾ 'ಜ್ಞಾನಿಸುಖಸ್ಯ' ಎಂಬುದು ಪ್ರತಿಜ್ಞಾ ರೂಪವಾಗಿದೆಯೆಂದು ಸಮರ್ಥಿಸುತ್ತಿದ್ದಾರೆ 'ಜ್ಞಾನಿಸುಖಸ್ಯ' ಇತ್ಯಾದಿ ಟೀಕೆಯಿಂದ.

**भावदीपः** – 'कथं नु तद्' इति वाक्योक्तमानुकूल्येन गृह्यमाणत्वरूपमित्यर्थः । अनिर्देश्यमित्यादिपूर्वभाष्यलब्धं हेतुमाह – **परमं सुखमितीति** ।। तस्यैव च कथं नु तदिति तच्छब्देन परामर्शादिति भावः ।

'ಕಥಂ ನು ತತ್' ಎಂಬ ವಾಕ್ಯದಲ್ಲಿ ಆನುಕೂಲ್ಯೇನ ಗೃಹ್ಯಮಾಣತ್ವವೆಂಬ ಲಿಂಗವು ಹೇಳಲ್ಪಟ್ಟಿದೆ ಎಂದರ್ಥ. 'ಅನಿರ್ದೇಶ್ಯಮ್' ಇತ್ಯಾದಿ ಹಿಂದಿನ ಭಾಷ್ಯದಿಂದ ಲಬ್ಧವಾದ ಹೇತುವನ್ನು 'ಪರಮಂ ಸುಖಮ್' ಎಂದು ಹೇಳಿದ್ದಾರೆ. ಅಂತಹ ಜ್ಞಾನಿಸುಖವನ್ನೇ 'ಕಥಂ ನು ತತ್' ಎಂಬ 'ತತ್' ಶಬ್ದದಿಂದ ಪರಾಮರ್ಶಿಸಬೇಕೆಂದು ಅಭಿಪ್ರಾಯ.

**भावदीपः** – 'तदेतदिति मन्यन्ते कथं नु तद् विजानीयाम्' इति 'तेषां सुखं शाश्वतम्' इत्युक्तज्ञानिसुखग्रहणमिति विपरीतश्रुतिभ्रम इत्यन्यत्रोक्तरीत्या सुखश्रुतेर्निरवकाशत्वाय तद्विशेषणभूततदादिसर्वनामश्रुतेर्निरवकाशत्वोक्तिपरतया तेषामित्यादिभाष्यं शङ्कापूर्वं व्याचष्टे – **नचेति** ।।

'ತದೇತದಿತಿ ಮನ್ಯಂತೇ ಕಥಂ ನು ತದ್ ವಿಜಾನೀಯಾಮ್' 'ತೇಷಾಂ ಸುಖಂ ಶಾಶ್ವತಮ್' ಎಂಬಲ್ಲಿ ಜ್ಞಾನಿಸುಖದ ಗ್ರಹಣವು ವಿವಕ್ಷಿತವಾಗಿದೆ. 'ವಿಪರೀತಶ್ರುತಿಭ್ರಮಃ' ಎಂಬುದಾಗಿ ಬೇರೆ ಕಡೆ ಹೇಳಲ್ಪಟ್ಟ ಸುಖಶ್ರುತಿಗೆ ನಿರವಕಾಶತ್ವವನ್ನು ಸಮರ್ಥನೆ ಮಾಡುವುದಕ್ಕಾಗಿ, ಅದಕ್ಕೆ ವಿಶೇಷಣಭೂತವಾದ 'ತತ್' ಮೊದಲಾದ ಸರ್ವನಾಮಶ್ರುತಿಗಳಿಗೆ ನಿರವಕಾಶತ್ವವನ್ನು ಸಮರ್ಥನೆ ಮಾಡುವುದಕ್ಕಾಗಿ ತೇಷಾಮ್' ಇತ್ಯಾದಿ ಭಾಷ್ಯವನ್ನು ಶಂಕಾಪೂರ್ವಕವಾಗಿ ವ್ಯಾಖ್ಯಾನ ಮಾಡುತ್ತಿದ್ದಾರೆ 'ನಚ' ಇತ್ಯಾದಿ ಗ್ರಂಥದಿಂದ.

**भावदीपः** – 'सुखविशिष्टा' इति सूत्रे 'लक्षणं परमानन्दः' इत्युक्तदिशा वा 'भूमा सम्प्रसादाद्' इत्यत्रोक्तदिशा 'यो वै भूमा तत्सुखम्' इत्युक्त्या वेति भावः ।

'ಸುಖವಿಶಿಷ್ಟ' ಇತ್ಯಾದಿ ಸೂತ್ರದಲ್ಲಿ 'ಲಕ್ಷಣಂ ಪರಮಾನಂದಃ' ಎಂಬುದಾಗಿ ಹೇಳಿದಂತೆ, ಅಥವಾ 'ಭೂಮಾ ಸಂಪ್ರಸಾದಾತ್' ಎಂಬಲ್ಲಿ ಹೇಳಿದಂತೆ, ಅಥವಾ 'ಯೋ ವೈ ಭೂಮಾ ತತ್‌ಸುಖಮ್' ಎಂಬಲ್ಲಿ ಹೇಳಿದಂತೆ ಎಂದು ತಿಳಿಯಬೇಕು.

ಪರಿಪೂರ್ಣಚಂದ್ರಿಕಾ

**भावदीपः** – तेषामिति तच्छब्दार्थसूचनाय एको वशीति त्रिपाद्युक्तिः । आत्मस्थं स्वस्थितम् । तदिति प्रातिपदिकश्रुतेः सावकाशत्वमाशङ्क्य नपुंसकलिङ्गेन तस्या निरवकाशत्वमाह – **नचेति** ।।

'ತೇಷಾಮ್' ಎಂಬಲ್ಲಿರುವ 'ತತ್' ಶಬ್ದದ ಅರ್ಥವನ್ನು ಸೂಚನೆ ಮಾಡುವುದಕ್ಕಾಗಿ 'ಏಕೋ ವಶೀ' ಎಂಬ ಉಳಿದ ಮೂರು ಪಾದಗಳನ್ನು ಹೇಳಿರುತ್ತಾರೆ. 'ಆತ್ಮಸ್ಥಂ' ಎಂದರೆ ತನ್ನಲ್ಲಿರುವ ಎಂದರ್ಥ. ತತ್' ಎಂಬ ಪ್ರಾತಿಪದಿಕಶ್ರುತಿಗೆ ಸಾವಕಾಶತ್ವವನ್ನು ಆಶಂಕೆ ಮಾಡಿ, ನಪುಂಸಕಲಿಂಗದಿಂದ ಅಂತಹ ಶ್ರುತಿಗೆ ನಿರವಕಾಶತ್ವವನ್ನು ಸಮರ್ಥಿಸುತ್ತಿದ್ದಾರೆ 'ನಚ' ಇತ್ಯಾದಿ ಗ್ರಂಥದಿಂದ.

**भावदीपः** – तथाच तस्यैवेत्ययुक्तमिति भावः ।। **प्रकृतत्वादिति** ।। तत्रैवं मन्त्रे । 'एको वशी' इति प्रकृतत्वादित्यर्थः ।

ಆದ್ದರಿಂದಲೇ 'ತಸ್ಯೈವ' ಇತ್ಯಾದಿಯಾಗಿ ಹೇಳಿದ್ದು ಅಯುಕ್ತವೆಂದು ತಿಳಿಯಬೇಕು. 'ಪ್ರಕೃತತ್ವಾತ್' ಎಂದರೆ ಅದೇ ಮಂತ್ರದಲ್ಲಿ 'ಏಕೋ ವಶೀ' ಎಂಬುದಾಗಿ ಪ್ರಕೃತವಾದ್ದರಿಂದ ಎಂದರ್ಥ.

**भावदीपः** – ननु पूर्वत्र 'एष आत्मा' इत्यत्र एतच्छब्दस्य पूर्वोक्तज्योतिःपरत्वेऽपि विधेयात्मापेक्षया पुल्लिङ्गत्ववदिहापि विधेयसुखापेक्षया नपुंसकत्वमस्त्वित्याशङ्कानिरासायोक्तं तदित्यादीत्यादिपदम् । तदेतच्छब्दयोरेकस्य तथात्वेऽप्येकस्योद्देशकत्वावश्यम्भावेन द्वयोर्नपुंसकत्वायोगादित्यर्थः । अङ्गीकृत्य चेदमुदितम् । वस्तुतस्तु तदिति प्रातिपदिकश्रुतिरेव स्वतो निरवकाशेति भावेनाह – **सम्भवदिति**

ಹಿಂದೆ 'ಏಷ ಆತ್ಮಾ' ಎಂಬಲ್ಲಿರುವ 'ಏತತ್' ಶಬ್ದದಿಂದ ಪೂರ್ವೋಕ್ತವಾದ ಜ್ಯೋತಿಸ್ಸನ್ನು ಪರಾಮರ್ಶ ಮಾಡಿದರೂ ವಿಧೇಯವಾದ ಆತ್ಮಶಬ್ದದ ಅಪೇಕ್ಷೆಯಿಂದ ಪುಲ್ಲಿಂಗದಲ್ಲಿರುವಂತೆ ಇಲ್ಲಿಯೂ ಸಹ ವಿಧೇಯವಾದ ಸುಖದ ಅಪೇಕ್ಷೆಯಿಂದ ನಪುಂಸಕಲಿಂಗವನ್ನು ಹೇಳಬಹುದಲ್ಲವೇ? ಎಂಬ ಆಶಂಕೆಯನ್ನು ಪರಿಹಾರ ಮಾಡುವುದಕ್ಕಾಗಿ 'ತದಿತ್ಯಾದಿ' ಎಂಬಲ್ಲಿ ಆದಿಪದವನ್ನು ಹೇಳಿರುತ್ತಾರೆ. 'ತದೇತತ್' ಶಬ್ದಗಳಲ್ಲಿ ಒಂದಕ್ಕೆ ನಪುಂಸಕಲಿಂಗತ್ವವನ್ನು ಕೂಡಿಸಬಹುದಾದರೂ ಎರಡೂ ಪದಗಳಿಗೆ ನಪುಂಸಕಲಿಂಗವನ್ನು ಕೂಡಿಸಲು ಸಾಧ್ಯವಿಲ್ಲ. ಈ ವಿಷಯವನ್ನು ಅಂಗೀಕಾರ ಮಾಡಿ ಹೇಳಿದ್ದು, ವಾಸ್ತವಿಕವಾಗಿ 'ತತ್' ಇತ್ಯಾದಿ ಪ್ರಾತಿಪದಿಕಶ್ರುತಿಯೇ ಸ್ವತಃ ನಿರವಕಾಶವಾಗಿದೆ ಎಂಬ ಅಭಿಪ್ರಾಯದಿಂದ, 'ಸಂಭವಾತ್' ಇತ್ಯಾದಿ ಟೀಕೆಯೂ ಹೊರಟಿದೆ.

**भावदीपः** – **दूरस्थेति** ।। ज्ञानिसुखेन व्यवहितेत्यर्थः । अन्यथा पूर्वत्रापि 'तस्मिन् यदन्तः' इत्यत्राप्याकाशपरामर्शित्वं तच्छब्दस्य न स्यात् । व्यवहितपुण्डरीकपरत्वमेव स्यादिति भावः ।।

'ದೂರಸ್ಥ' ಎಂದರೆ 'ಜ್ಞಾನಿಸುಖಕ್ಕಿಂತ ವ್ಯವಹಿತವಾದ' ಎಂದರ್ಥ. ಇಲ್ಲದಿದ್ದರೆ ಹಿಂದೆಯೂ ಸಹ 'ತಸ್ಮಿನ್ ಯದಂತಃ' ಎಂಬಲ್ಲಿಯೂ ತತ್‌ಶಬ್ದದಿಂದ ಆಕಾಶದ ಪರಾಮರ್ಶವು ತಪ್ಪಾಗಬೇಕಾದೀತು. ವ್ಯವಹಿತವಾದ ಪುಂಡರೀಕದ ಪರಾಮರ್ಶವನ್ನೇ ಮಾಡಬೇಕಾದೀತು.

**भावदीपः – अत इति ।।** सन्निहितपरामर्शिनपुंसकं तदेतत् श्रुतिसमानाधिकृत-सुखश्रुत्यनुरोधादित्यर्थः ।। **अनिर्देश्यत्वादीति ।।** काठके आथर्वणे च श्रुतमिति योज्यम् । भाष्ये परमात्मैवेत्यनन्तरम् आनुकूल्येन गृह्यमाण इति शेषं मत्वा भाष्यमाकाङ्क्षाक्रमेण व्याचष्टे – **कथन्नु तदिति ।।**

'ಅತಃ' ಎಂದರೆ ಸನ್ನಿಹಿತವಾದದ್ದನ್ನು ಪರಾಮರ್ಶಿಸುವ ನಪುಂಸಕಲಿಂಗದಲ್ಲಿರುವ 'ತದೇತತ್' ಎಂಬ ಪದಗಳು ಸಮಾನಾಧಿಕರಣದಲ್ಲಿರುವುದರಿಂದ, ಇಂತಹ ಶ್ರುತಿಗೆ ಅನುಸಾರಿಯಾಗಿ ಎಂದು 'ಅತಃ' ಪದದ ಅರ್ಥ. 'ಅನಿರ್ದೇಶ್ಯತ್ವಾದಿ' ಎಂದು ಟೀಕೆಯಲ್ಲಿದೆ. ಕಾಠಕದಲ್ಲಿ ಮತ್ತು ಆಥರ್ವಣದಲ್ಲಿ ಅನಿರ್ದೇಶ್ಯತ್ವವು ಶ್ರುತವಾಗಿದೆಯೆಂದು ಯೋಜನೆ ಮಾಡಿಕೊಳ್ಳಬೇಕು. ಭಾಷ್ಯದಲ್ಲಿ ಪರಮಾತ್ಮನೇ ಎಂಬುದರ ಅನಂತರ 'ಆನುಕೂಲ್ಯೇನ ಗೃಹ್ಯಮಾಣೇ' ಎಂಬುದನ್ನು ಶೇಷಪೂರಣ ಮಾಡಿಕೊಳ್ಳಬೇಕೆಂಬ ಅಭಿಪ್ರಾಯದಿಂದ ಭಾಷ್ಯವನ್ನು ಆಕಾಂಕ್ಷಕ್ರಮದಿಂದ ಯೋಜನೆ ಮಾಡುತ್ತಿದ್ದಾರೆ 'ಕಥನ್ನು ತತ್' ಇತ್ಯಾದಿಯಾಗಿ.

**भावदीपः –** सुखरूप इत्यस्यार्थ इति भ्रमनिरासाय कथं न्विति वाक्योक्तिः । अनिर्देश्यसुखरूप इति भाष्यं प्रागुक्तसुखश्रुतेः सावकाशत्वोक्तिपरतया तात्पर्यतो व्याचष्टे – **नचेति ।।**

'ಸುಖರೂಪಃ' ಎಂಬುದರ ಅರ್ಥವೇ 'ಕಥಂನು ತತ್' ಎಂಬ ಭ್ರಮೆಯನ್ನು ನಿರಾಸ ಮಾಡುವುದಕ್ಕಾಗಿ 'ಕಥಂ ನು ತತ್' ಇತ್ಯಾದಿ ವಾಕ್ಯವನ್ನು ಹೇಳಿದ್ದಾರೆ. 'ಅನಿರ್ದೇಶ್ಯಸುಖರೂಪಃ' ಎಂಬ ಭಾಷ್ಯವು ಹಿಂದೆ ಹೇಳಲ್ಪಟ್ಟ ಸುಖಶ್ರುತಿಯ ಸಾವಕಾಶತ್ವ ಸಮರ್ಥನೆಗಾಗಿ ಹೊರಟಿದೆಯೆಂದು ವ್ಯಾಖ್ಯಾನ ಮಾಡುತ್ತಿದ್ದಾರೆ 'ನಚ' ಇತ್ಯಾದಿ ಟೀಕೆಯಿಂದ.

**भावदीपः –** ननु तदेतत् श्रुतिसामानाधिकरण्यात्साऽपि निरवकाशेत्युक्तमिति शङ्कते – **तेषामिति ।। नेति चेदिति ।।** सुखश्रुतेर्विष्णुपरत्वं नेति चेदित्यर्थः । यज्ज्ञानाच्छाश्वतं सुखं स भगवान् यद् ब्रह्म अनिर्देश्यं सुखमिति वदन्ति तदेतत् स्वरूपमिति मन्यन्त इत्यन्यत्रोक्तं वाक्यमत्र व्याकुर्वन् तदुत्तरत्वेन भगवानित्यन्तस्य भावमाह – **चेतन इति ।।**

'ತದೇತತ್' ಎಂಬ ಶ್ರುತಿಯ ಸಾಮಾನಾಧಿಕರಣ್ಯದಿಂದ 'ಕಥಂ ನು ತತ್' ಎಂಬ ಶ್ರುತಿಯೂ ಸಹ ನಿರವಕಾಶವಾಗಿದೆಯಲ್ಲವೇ? ಎಂಬ ಶಂಕೆಯನ್ನು 'ತೇಷಾಂ' ಎಂಬುದರಿಂದ ತೋರಿಸುತ್ತಿದ್ದಾರೆ. 'ನೇತಿ

ಚೇತ್' ಎಂದರೆ ಸುಖಶ್ರುತಿಯು ವಿಷ್ಣುಪರವಾಗದಿದ್ದಲ್ಲಿ ಎಂದರ್ಥ. ಯಾರ ಜ್ಞಾನದಿಂದ ಶಾಶ್ವತವಾದ ಸುಖವು ದೊರೆಯುತ್ತದೋ, 'ಯಜ್ಞಾನಾತ್ ಶಾಶ್ವತಮ್ ಸುಖಂ ಸ ಭಗವಾನ್ ಯದ್ ಬ್ರಹ್ಮ ಅನಿರ್ದೇಶ್ಯಂ ಸುಖಮ್ ಇತಿ ವದಂತಿ ತದೇತತ್ ಸ್ವರೂಪಮಿತಿ ಮನ್ಯಂತೇ' ಎಂಬುದಾಗಿ ಬೇರೆ ಕಡೆ ಹೇಳಲ್ಪಟ್ಟ ವಾಕ್ಯವನ್ನು ಇಲ್ಲಿ ವ್ಯಾಖ್ಯಾನ ಮಾಡುತ್ತಾ 'ಭಗವಾನ್' ಎಂಬಲ್ಲಿಯ ತನಕ ಇರುವ ವಾಕ್ಯದ ಅಭಿಪ್ರಾಯವನ್ನು 'ಚೇತನೇ' ಇತ್ಯಾದಿ ಟೀಕೆಯಿಂದ ಸ್ಪಷ್ಟಪಡಿಸಿದ್ದಾರೆ.

**भावदीपः – 'यद् ब्रह्म' इत्यादेः पूर्वकृतशङ्कान्तरनिवर्तकत्वेनार्थमाह – नचेत्यादिना ।। यदिति ।। 'यतो वाचो निवर्तन्ते' इत्यादौ प्रसिद्धं यदनिर्देश्यम् इत्यर्थः । गृह्णन्ति ज्ञानार्थं प्रार्थयन्त इत्यर्थः ।**

'ಯದ್ ಬ್ರಹ್ಮ' ಇತ್ಯಾದಿ ವಾಕ್ಯವು ಹಿಂದೆ ಮಾಡಲ್ಪಟ್ಟ ಶಂಕೆಯ ಪರಿಹಾರಕ್ಕಾಗಿ ಹೊರಟಿದೆಯೆಂಬ ಅರ್ಥವನ್ನು ಹೇಳುತ್ತಿದ್ದಾರೆ 'ನಚ' ಇತ್ಯಾದಿ ಟೀಕೆಯಿಂದ. 'ಯತ್' ಎಂದರೆ 'ಯತೋ ವಾಚೋ ನಿವರ್ತಂತೇ' ಇತ್ಯಾದಿಯಲ್ಲಿ ಪ್ರಸಿದ್ಧವಾದ ಅನಿರ್ದೇಶ್ಯತ್ವವು ಎಂದರ್ಥ. 'ಗೃಹ್ಣಂತಿ' ಎಂದರೆ ಜ್ಞಾನಕ್ಕೋಸ್ಕರ ಪ್ರಾರ್ಥಿಸುತ್ತಾರೆ ಎಂದರ್ಥ.

**भावदीपः – काठकभाष्ये तु 'तदेव भगवद्रूपं परमं सुखं ज्ञानिसुखं तु विप्लुण्मात्रम्' इति सुखं विधेयमित्यर्थान्तरमुक्तम् । तत्र तद् गुह्यं ब्रह्मेत्युपक्रान्तम् एतद् एकं रूपमिति मध्ये चोक्तं ब्रह्मणो रूपं परमं सुखमित्यर्थ इति नपुंसकोपपत्तिरुक्ता चन्द्रिकायाम् । इदानीं 'तमेव' इत्यादिभाष्यं सम्भवत्समीपेत्यादिना पूर्वोक्तशङ्काव्यावर्तकत्वेन व्याचष्टे – नच वक्तव्यमिति ।।**

ಕಾಠಕಭಾಷ್ಯದಲ್ಲಿ 'ತದೇವ ಭಗವದ್ರೂಪಂ ಪರಮಂ ಸುಖಂ ಜ್ಞಾನಿಸುಖಂ ತು ವಿಪ್ಲುಣ್ಮಾತ್ರಮ್ ಇತಿ ಸುಖಂ ವಿಧೇಯಮ್' ಎಂಬ ಅರ್ಥಾಂತರವನ್ನು ಹೇಳಿದ್ದಾರೆ. ಅಲ್ಲಿ 'ತತ್ ಗುಹ್ಯಂ ಬ್ರಹ್ಮ' ಎಂಬಲ್ಲಿ ಹೇಳಲ್ಪಟ್ಟ 'ಏತತ್ ಏಕಂ ರೂಪಂ' ಎಂಬುದಾಗಿ ಮಧ್ಯದಲ್ಲಿ ಹೇಳಲ್ಪಟ್ಟ ಬ್ರಹ್ಮನ ರೂಪವು 'ಪರಮಂ ಸುಖಮ್' ಎಂಬುದರ ಅರ್ಥವಾಗಿದೆ. ಹೀಗೆ ನಪುಂಸಕಲಿಂಗವು ಯುಕ್ತವಾಗುತ್ತದೆಂದು ಚಂದ್ರಿಕೆಯಲ್ಲಿ ಹೇಳಿದ್ದಾರೆ. ಈಗ 'ತಮೇವ' ಇತ್ಯಾದಿ ಭಾಷ್ಯವನ್ನು ಸಂಭವತ್ಸಮೀಪ' ಇತ್ಯಾದಿಯಾಗಿ ಹಿಂದೆ ಹೇಳಿದ ಶಂಕೆಯ ಪರಿಹಾರಕವಾಗಿ ವ್ಯಾಖ್ಯಾನ ಮಾಡುತ್ತಿದ್ದಾರೆ 'ನಚ ವಕ್ತವ್ಯಮ್' ಇತ್ಯಾದಿ ಟೀಕೆಯಿಂದ.

**भावदीपः – दूरस्थेति ।।** यद्यपि 'तेषां सुखम्' इत्युक्तज्ञानिसुखाद् 'एको वशी' इत्यादिनोक्तविष्णुर्दूरस्थः । 'चेतनश्चेतनानाम्' इत्युक्तस्तु सन्निहित एव । एतन्मन्त्रस्य 'तेषां सुखम्' इत्यतोऽनन्तरमाम्नानाद् अनेनैव मन्त्रेण पूर्वं

प्रकृतत्वस्योक्तेः । तथाप्यभ्युपेत्य वादेन वा चेतन इति मन्त्रेऽपि 'तेषां शान्तिः शाश्वती नेतरेषाम्' इति श्रवणेन शान्तिशब्दितसुखव्यवधानं चेतन इत्यस्याप्यस्तीति वा दूरस्थेत्युक्तम् ।

ವಾಸ್ತವಿಕವಾಗಿ 'ತೇಷಾಂ ಸುಖಮ್' ಎಂಬಲ್ಲಿ ಹೇಳಲ್ಪಟ್ಟ ಜ್ಞಾನಿಸುಖಕ್ಕಿಂತ 'ಏಕೋ ವಶೀ' ಎಂಬಲ್ಲಿ ಹೇಳಲ್ಪಟ್ಟ ವಿಷ್ಣು ದೂರದಲ್ಲಿ ಪ್ರಸಕ್ತನಾಗಿದ್ದಾನೆ. 'ಚೇತನಶ್ಚೇತನಾನಾಮ್' ಎಂಬುದೇ ಸನ್ನಿಹಿತವಾಗಿದೆ. ಈ ಮಂತ್ರವು 'ತೇಷಾಂ ಸುಖಮ್' ಎಂಬುದರ ಅನಂತರ ಪಠಿತವಾದ್ದರಿಂದ, ಈ ಮಂತ್ರದಿಂದಲೇ ಪೂರ್ವಪ್ರಕೃತತ್ವವನ್ನು ಹೇಳಬಹುದು ಆದರೂ ಸಹ ಅಂಗೀಕಾರವಾದ ಮಾಡಿ, 'ಚೇತನಃ' ಎಂಬ ಮಂತ್ರದಲ್ಲಿಯೂ 'ತೇಷಾಂ ಶಾಂತಿಃ ಶಾಶ್ವತೀ ನೇತರೇಷಾಮ್' ಎಂಬುದಾಗಿ ಶ್ರುತವಾದ್ದರಿಂದ ಶಾಂತಿ ಶಬ್ದದ ಅರ್ಥವೆನಿಸಿದ ಸುಖದ ವ್ಯವಧಾನವು 'ಚೇತನಃ' ಎಂಬುದಕ್ಕೂ ಇದೆ ಎಂಬುದಾಗಿ ತಿಳಿಸಲು 'ದೂರಸ್ಥ' ಎಂಬುದಾಗಿ ಹೇಳಿದ್ದಾರೆ.

**भावदीपः** – अनुभानं नाम तदिच्छानुरोधेन भानम्, अनुकृतिशब्देन अनुभानमुच्यते । भानस्यापि क्रियारूपत्वात् । अन्यकृतीनामप्युपसङ्ग्रहार्थमनुकृतेरित्युक्तमिति तत्त्वप्रदीपोक्त्या अनुकृतेरित्यस्य अनुभानादित्यर्थं मत्वाऽह – **एतदधीनप्रकाशेति** ।।

ಅನುಭಾನವೆಂದರೆ ಅವನ ಇಚ್ಛೆಗೆ ಅನುಸಾರಿಯಾಗಿ ತಿಳಿಯುವಿಕೆ ಎಂದರ್ಥ. ಇಂತಹ ಅನುಭಾನವು ಅನುಕೃತಿ ಶಬ್ದದಿಂದ ಪ್ರತಿಪಾದ್ಯವಾಗಿದೆ. ಭಾನವೂ ಕೂಡ ಕ್ರಿಯಾರೂಪವೇ ಆಗಿದೆ. ಇದರಿಂದ ಬೇರೆ ಕೃತಿಗಳನ್ನು ಸಂಗ್ರಹ ಮಾಡಲು 'ಅನುಕೃತೇಃ' ಎಂದೇ ಹೇಳಿದ್ದಾರೆಂದು ತತ್ವಪ್ರದೀಪದಲ್ಲಿ ಸೂತ್ರದ 'ಅನುಕೃತೇಃ' ಎಂಬ ಪದದ ಸಾರ್ಥಕ್ಯವನ್ನು ತಿಳಿಸಿಕೊಟ್ಟಿದ್ದಾರೆ. ಈ ಅಭಿಪ್ರಾಯದಿಂದ ಟೀಕೆಯಲ್ಲಿ 'ಏತದಧೀನಪ್ರಕಾಶ' ಇತ್ಯಾದಿ ಮಾತು ಹೊರಟಿದೆ.

**भावदीपः** – सर्वमित्यस्यार्थः – **सूर्यादीनामिति** ।। एतदधीनेत्युक्त्या सूत्रे तस्येति पदम् आनुकूल्येन गृह्यमाणपरं सद् अनुकृतेरित्यतः पूर्वमप्यन्वेति स्वस्थाने च स्थितं सत् 'तस्य भासा' इति वाक्यप्रतीकं च भवतीति दर्शितम् । स्पष्टीकृतं चैतत् तन्त्रदीपिकायामस्माभिः । भाष्ये अनिर्देश्यसुखरूपत्वे च अनुकृत्यादेर्हेतुत्वोक्त्या समीपस्थदूरस्थत्यागोपादानयोर्हेतुत्वं लिङ्गसमन्वयहेतुत्वं च लब्धमिति दर्शयन् भाष्यस्य फलितोक्तिपरत्वेन भावमाह – **अत इति** ।।

'ಸರ್ವಮ್' ಎಂಬುದರ ಅರ್ಥವೇ 'ಸೂರ್ಯಾದೀನಾಮ್' ಎಂಬುದು, 'ಏತದಧೀನ' ಎಂದು ಹೇಳಿದ್ದರಿಂದ ಸೂತ್ರದಲ್ಲಿ 'ತಸ್ಯ' ಎಂಬ ಪದವು 'ಆನುಕೂಲ್ಯೇನ ಗೃಹ್ಯಮಾಣಪರಂ ಸತ್ ಅನುಕೃತೇಃ'

ಎಂಬುದಕ್ಕಿಂತ ಮೊದಲು ಅನ್ವಯ ಹೊಂದುತ್ತದೆ. ಮತ್ತು ತನ್ನ ಸ್ಥಾನದಲ್ಲಿಟ್ಟುಕೊಂಡು 'ತಸ್ಯಭಾಸಾ' ಎಂಬ ವಾಕ್ಯಕ್ಕೂ ಕೂಡ ಪ್ರತೀಕವಾಗುತ್ತದೆಂದು ತಿಳಿಸಿದ್ದಾರೆ. ಇದನ್ನು ತಂತ್ರದೀಪಿಕಾದಿ ಗ್ರಂಥಗಳಲ್ಲಿ ನಾವೇ ಸ್ಪಷ್ಟಪಡಿಸಿದ್ದೇವೆ. ಭಾಷ್ಯದಲ್ಲಿ ಅನಿರ್ದೇಶ್ಯಸುಖರೂಪವಿಷಯದಲ್ಲಿ ಅನುಕೃತ್ಯಾದಿಗಳನ್ನು ಹೇತುವೆಂದು ಹೇಳಿದ್ದರಿಂದ, ಸಮೀಪದಲ್ಲಿರುವುದನ್ನು ಬಿಟ್ಟು ದೂರದಲ್ಲಿರುವುದನ್ನು ಸ್ವೀಕಾರ ಮಾಡಲು ಕಾರಣವನ್ನು ಹೇಳಿದ್ದರಿಂದ, ಲಿಂಗಸಮನ್ವಯದ ಹೇತುವನ್ನು ಹೇಳಿದಂತಾಯಿತು. ಹೀಗೆ ಸಮರ್ಥಿಸಿ, ಭಾಷ್ಯದ ಮಾತಿಗೆ ಫಲಪರವಾಗಿ ವ್ಯಾಖ್ಯಾನ ಮಾಡುತ್ತಿದ್ದಾರೆ 'ಅತಃ' ಇತ್ಯಾದಿಯಾಗಿ.

**भावदीपः** – उक्तलिङ्गद्वयाभावादित्यर्थः । सर्वं सूर्यादीत्युक्त्या श्रौतसर्वशब्दोऽपि सूर्यादितेजोमात्रपरो न सर्वजगत्पर इति व्याख्यातं भवति । नच तद्भासेति भाष्ये शेषमाह – **जगद्भातीति शेष इति** ।। तेन 'तस्य भासा' इति श्रुतौ सर्वशब्दो जगत्परो न तेजोमात्रपर इति दर्शितम् । नहीत्यादेर्भावमाह – **एतदुभयस्येति** ।। सर्वतेजोनियन्तृत्वसर्वजगत्प्रकाशकत्वरूपोभयस्येत्यर्थः ।।

'ಅತಃ' ಎಂದರೆ ಹಿಂದೆ ಹೇಳಿದ ಎರಡು ಲಿಂಗಗಳಿರುವುದರಿಂದ ಎಂದರ್ಥ. 'ಸರ್ವಮ್ ಸೂರ್ಯಾದಿ' ಎಂಬ ಟೀಕೆಯಿಂದ ಶ್ರುತಿಯಲ್ಲಿರುವ ಸರ್ವಶಬ್ದಕ್ಕೆ ಸೂರ್ಯಾದಿತೇಜಸ್ಸುಗಳನ್ನಷ್ಟೇ ವಿವಕ್ಷಿಸಬೇಕು. ಸರ್ವಜಗತ್ತನ್ನು ವಿವಕ್ಷಿಸಬಾರದೆಂದು ವ್ಯಾಖ್ಯಾನಿಸಿದಂತಾಯಿತು. 'ನಚ ತದ್ಭಾಸಾ' ಎಂಬ ಭಾಷ್ಯದಲ್ಲಿ ಮಾಡಬೇಕಾದ ಶೇಷಪೂರಣವನ್ನು 'ಜಗದ್ಭಾತೀತಿ ಶೇಷಃ' ಎಂಬುದರಿಂದ ಮಾಡುತ್ತಿದ್ದಾರೆ. ಹೀಗೆ ಹೇಳಿದ್ದರಿಂದ 'ತಸ್ಯ ಭಾಸಾ' ಎಂಬ ಶ್ರುತಿಯಲ್ಲಿರುವ ಸರ್ವಶಬ್ದವು ಜಗತ್ಪರವಾಗಿದೆ ಕೇವಲ ತೇಜೋಮಾತ್ರಪರವಾಗಿಲ್ಲವೆಂದು ಹೇಳಿದಂತಾಯಿತು. 'ನಹಿ' ಇತ್ಯಾದಿ ವಾಕ್ಯದ ಅಭಿಪ್ರಾಯವನ್ನು 'ಏತದುಭಯಸ್ಯ' ಎಂಬುದರಿಂದ ಹೇಳಿದ್ದಾರೆ. ಅಂದರೆ ಸಕಲ ತೇಜಸ್ಸುಗಳ ನಿಯಂತೃತ್ವವು ಸಕಲ ಜಗತ್ತಿನ ಪ್ರಕಾಶತ್ವಗಳೆರಡು ಎಂದರ್ಥ.

**भावदीपः** – **तदुक्तमिति** ।। चतुर्थस्कन्धतात्पर्ये विंशेऽध्याये भगवत्पादोदाहृत-शब्दनिर्णयवाक्ये सन्निधेरपि योग्यताया बलीयस्त्वमुक्तमित्यर्थः ।

ಚತುರ್ಥಸ್ಕಂಧತಾತ್ಪರ್ಯದ ಇಪ್ಪತ್ತನೆಯ ಅಧ್ಯಾಯದಲ್ಲಿ ಶ್ರೀಮದಾಚಾರ್ಯರೇ ಉಲ್ಲೇಖ ಮಾಡುವಂತಹ ಶಬ್ದನಿರ್ಣಯವಾಕ್ಯದಲ್ಲಿ ಸನ್ನಿಧಿಗೂ ಸಹ ಯೋಗ್ಯತೆಗಿಂತ ಬಲೀಯಸ್ತ್ವವನ್ನು ಹೇಳಿದ್ದಾರೆಂದು ಅಭಿಪ್ರಾಯ.

**भावदीपः** – इति शब्दानन्तरं श्रुतेरिति शेषमाह – **इति श्रुतेरिति शेष इति** ।। प्रकृतार्थद्वयं श्रुतौ व्यनक्ति – **रश्मीदिति** ।।

'ಇತಿ' ಶಬ್ದದ ಅನಂತರ 'ಶ್ರುತೇಃ' ಎಂಬುದನ್ನು ಶೇಷಪೂರಣ ಮಾಡಿಕೊಳ್ಳಬೇಕೆಂಬ ಅಭಿಪ್ರಾಯದಿಂದ 'ಇತಿ ಶ್ರುತೇರಿತಿ ಶೇಷಃ' ಎಂದಿದ್ದಾರೆ. ಪ್ರಕೃತವಾದ ಎರಡು ಅರ್ಥಗಳನ್ನು ಶ್ರುತಿಯಲ್ಲಿ ಸಮನ್ವಯ ಮಾಡಿ ವ್ಯಾಖ್ಯಾನ ಮಾಡುತ್ತಿದ್ದಾರೆ 'ರಶ್ಮೀತ್' ಇತ್ಯಾದಿಯಾಗಿ.

**भावदीपः** – अग्नीदित्यस्य अग्निसमिन्धकत्वमिव रश्मीच्छब्दस्य रश्मिसमिन्धकत्वमर्थ इत्युपेत्योक्तम् – **सूर्यादीति** ।। **नारायणेति** ।। नारायणं पुरुषमिति वाक्यशेषादिति भावः । एषा च श्रुतिरन्तर्नयोक्ता व्याख्याता च । श्रुत्यनुरोधेन भाष्यस्थपदानामप्यर्थद्वयमाह – **नारायणेति** ।। २२ ।।

'ಅಗ್ನೀತ್' ಎಂಬುದಕ್ಕೆ 'ಅಗ್ನಿಸಮಿಂಧಕತ್ವಮ್' ಎಂಬರ್ಥವನ್ನು ಮಾಡುವಂತೆ, 'ರಶ್ಮೀತ್' ಎಂಬ ಪದಕ್ಕೆ 'ರಶ್ಮಿಸಮಿಂಧಕತ್ವಮ್' ಎಂಬರ್ಥವನ್ನೇ ಮಾಡಬೇಕೆಂದಂತಾಯಿತು. 'ನಾರಾಯಣಂ ಪುರುಷಮ್' ಎಂಬ ವಾಕ್ಯಶೇಷದ ಬಲದಿಂದ ನಾರಾಯಣನೇ ಪ್ರತಿಪಾದ್ಯನೆಂದು ತಿಳಿಯುತ್ತದೆ. ಈ ಶ್ರುತಿಯನ್ನು ಅಂತರಧಿಕರಣದಲ್ಲಿ ವ್ಯಾಖ್ಯಾನ ಮಾಡಿದ್ದಾಗಿದೆ. ಶ್ರುತಿಗೆ ಅನುಸಾರಿಯಾಗಿ ಭಾಷ್ಯದಲ್ಲಿರುವ ಅರ್ಥಗಳನ್ನು 'ನಾರಾಯಣ' ಇತ್ಯಾದಿ ಟೀಕೆಯನ್ನು ಹೇಳುತ್ತಿದ್ದಾರೆ.

**वाक्यार्थमञ्जरी** –

**।। ॐ अनुकृतेस्तस्य च ॐ ।।**

**आनुकूल्येन गृह्यमाणत्वेति** ।। आनुकूल्येन अनुकूलत्वेन अत्यन्तमिष्टत्वेन गृह्यमाणं कथमनुभवामीत्यनेन प्रकारेण ज्ञानार्थं प्रार्थितं सुखं तस्य भावस्तत्त्वं सुखादन्यस्य अत्यन्तमिष्टत्वाभावात् । अत एव भाष्ये अनिर्देश्यसुखमित्युक्तम्। अत एव चन्द्रिकाकारैः केचित् त्वेतद्भाष्यानुसारन्यायविवरणोक्तमानुकूल्ये गृह्यमाणत्वं सुखमेवेत्याहुरिति स्वोत्प्रेक्षितपक्षो दर्शितः । प्रसिद्धं चानुकूलवेद्यं सुखम्, प्रतिकूलवेद्यं दुःखमिति ।। **उभयत्र सुखशब्दवृत्त्येति** ।। 'यो वै भूमा तत्सुखम्' इत्यादौ भगवति सुखशब्दवृत्तिर्ज्ञेया ।। **तदेतदिति** ।। तद् 'रूपं रूपं प्रतिरूपो बभूव' इत्यत्र प्रकृतम् एतद् एकं रूपं बहुधा यः करोतीत्यत्र च प्रकृतं भगवद्रूपम् अनिर्देश्यं साकल्येनादृश्यं परमं सुखमिति मन्यन्ते ज्ञानिनः । नु इदानीम् अहं तत्सुखं कथं केन प्रकारेण विजानीयाम् । तत्सुखं मत्प्रयत्नेन तथा भाति न वेत्यर्थः । नात्रानुकूल्येन गृह्यमाणपदं श्रूयत इत्यत आह – **आनुकूल्येनेति** ।। कथं नु पुत्रं पश्येयम्, स आगच्छति न वेत्यत्र यथा पुत्रज्ञानार्थं तदागमनप्रार्थनाधीः, तथा कथन्नु तद् विजानीयामित्यादि वाक्ये ज्ञानार्थमाविर्भावरूपज्ञान-प्रार्थनाधीरित्यभिप्रेत्यैवमुक्त

मिति ध्येयम् ।। **एको वशीति** ।। यः एकः स्वगतभेदवर्जितः सर्वमस्य वशे वर्तत इति वशी सर्वभूतानामन्तर्नियामकः एकं स्वात्मरूपं नियम्यानां बहुत्वात्तद्गतत्वेन बहुधा करोतीति तमात्मनि देहे जीवे वा तिष्ठतीति आत्मस्थं भगवन्तं ये धीराः पण्डिता अनुपश्यन्ति तेषामेव शाश्वतं नित्यमभिव्यक्तं सुखं नेतरेषामित्यर्थः ।। **नपुंसकसुखशब्देनेति** ।। नपुंसकलिङ्गशब्देन सुखशब्देन चेत्यर्थः ।। **ॐ अनुकृतेस्तस्य च ॐ** ।। आनुकूल्येन गृह्यमाणं ब्रह्मैव कुतः? अनुकृतेः अनुभानात् । 'तमेव भान्तमनुभाति सर्वम्' इति सूर्यादीनां तदधीनभानश्रवणादिति यावत् । किञ्च तस्य वाक्यप्रतीकग्रहणमेतत्। 'तस्य भासा सर्वमिदं विभाति' इति सर्वस्य तत्प्रकाश्यत्वोक्तेरित्यर्थः ।। **परमं सुखमिति**।। तेषां सुखमिति वाक्यगतसुखश्रुतिव्यावर्तये परमशब्दः ।। **चेतनश्चेतनानामिति** ।। चेतनानां चेतनत्वप्रदः परमचेतन इति वाक्यार्थः । पूर्वोक्तयोजनायां सत्यामेव योजनान्तरमाह – **यदिति** ।। गृह्णन्ति ज्ञानार्थं प्रार्थयन्ते । प्रतीतयोजनात्यागात् कथञ्चिदित्युक्तम् ।। **तमेव भान्तमिति** ।। सर्वं सूर्यादितेजोजातं भान्तं प्रकाशमानं तं भगवन्तम् अनुसृत्य भाति प्रकाशते । सर्वमिदं जगत् तस्य परमात्मनो भासा प्रकाशेन विभाति, प्रकाश्यत इत्यर्थः । सर्वशब्दस्य तेजःपरत्वेन व्याख्यातत्वादनुशब्दसमभिव्याहृतस्य भातीत्यस्य भासत इत्यर्थत्वात् सर्वं भातीत्यस्य नच तद्भासेत्यत्रानुवृत्त्यसम्भवात्तच्छेषं पूरयति – **जगद्भातीति शेष इति** ।। तदुक्तं चतुर्थतात्पर्ये 'अहं तत्तेजो रश्मीत्' इत्यादिभाष्यं मुक्तलिङ्गद्वयस्य विष्णुनिष्ठत्वप्रतिपादकत्वेन व्याचष्टे – **रश्मीदित्यादिना** ।। २२ ।।

## ಬ್ರಹ್ಮಮೀಮಾಂಸಾಶಾಸ್ತ್ರ

## ಸಕಲ ಜಗತ್ಪ್ರಕಾಶಕ ಶ್ರೀಹರಿಯೇ ಎನ್ನಲು ಗೀತೆಯ ಆಧಾರ

**स – ।। ॐ अपि स्मर्यते ॐ ।। २३ ।।**

ಸೂತ್ರಾರ್ಥ - 'ಜಗತ್ತು ಭಗವಂತನ ತೇಜಸ್ಸಿನಿಂದ ಬೆಳಗುತ್ತಿದೆ' ಎಂಬುದು ಸ್ಮೃತಿಯಿಂದಷ್ಟೇ ಅಲ್ಲ; ಶ್ರುತಿಯಿಂದಲೂ ತೀರ್ಮಾನವಾಗಿದೆ. 'ಯದಾದಿತ್ಯಗತಂ ತೇಜಃ' ಇತ್ಯಾದಿ ಭಗವದ್ಗೀತೆಯೇ ಈ ವಿಷಯದಲ್ಲಿ ಆಧಾರ.

। ಶ್ರೀವೇದವ್ಯಾಸದೇವರಿಂದ ರಚಿಸಲ್ಪಟ್ಟ ಬ್ರಹ್ಮಮೀಮಾಂಸಾಶಾಸ್ತ್ರದಲ್ಲಿ

ಅನುಕೃತ್ಯಧಿಕರಣವು ಸಮಾಪ್ತವಾಯಿತು ॥

ಅನುಕೃತ್ಯಧಿಕರಣ (೧-೩-೬)

ಶ್ರೀಜಗನ್ನಾಥಯತಿಗಳಿಂದ ರಚಿಸಲ್ಪಟ್ಟ

## ಸೂತ್ರದೀಪಿಕಾ

**सत्रदीपिका** — न केवलं हेतुकृतानुकृत्यादेर्विष्णुधर्मत्वं श्रूयते किन्तु कृष्णादिभिः ''यदादित्यगतं तेजो'' (भ.गीता. १५-१२.) इत्यादि स्मृत्यादिषूच्यत इत्यर्थः ।।२।।

ಅರ್ಥ -- ಅಪಿ = ಹೇತುವನ್ನಾಗಿ ಮಾಡಲ್ಪಟ್ಟ ಆನುಕೂಲ್ಯೇನ ಗೃಹ್ಯಮಾಣತ್ವವು ವಿಷ್ಣುವಿನ ಧರ್ಮವಾಗಿದೆಯೆಂದು ಶ್ರುತಿಯಿಂದಷ್ಟೇ ಶ್ರುತವಾಗಿಲ್ಲ ಹೊರತಾಗಿ, ಸ್ಮರ್ಯತೇ = ಶ್ರೀಕೃಷ್ಣನು ಭಗವದ್ಗೀತೆಯಲ್ಲಿ 'ಯದಾದಿತ್ಯಗತಂ ತೇಜಃ' ಇತ್ಯಾದಿಯಾಗಿ ಹೇಳಿದ್ದಾನೆ. ಈ ಸ್ಮೃತಿ ವಾಕ್ಯಗಳಿಂದಲೂ ಸೂರ್ಯಾದಿಗಳ ತೇಜಸ್ಸು ಭಗವದಧೀನವೆಂದು ತಿಳಿಯುತ್ತದೆ.

॥ ಸೂತ್ರದೀಪಿಕೆಯಲ್ಲಿ ಅನುಕೃತ್ಯಧಿಕರಣವು ಸಮಾಪ್ತವಾಯಿತು ॥

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचित-

## ब्रह्मसूत्रभाष्यम्

**भाष्यम् — ॐ ॥ अपि स्मर्यते ॥ ॐ ॥**

'यदादित्यगतं तेजो जगद् भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत् तेजो विद्धि मामकम् ॥' (गी. १५.१२) इति ।

ಅನುವಾದ - ಸ್ಮೃತಿ ಪ್ರಮಾಣವೂ ಸಹ ಈ ವಿಷಯದಲ್ಲಿ ಇರುತ್ತದೆ, 'ಸಮಸ್ತ ಜಗತ್ತನ್ನು ಬೆಳಗಿಸುವ ತೇಜಸ್ಸು ಸೂರ್ಯನಲ್ಲಿದೆ, ಚಂದ್ರ, ಅಗ್ನಿ ಮೊದಲಾದವರಲ್ಲೂ ಪ್ರಕಾಶಪಡಿಸುವ ಶಕ್ತಿಯು ಇದೆ. ಇದೆಲ್ಲವೂ ನನ್ನದೇ ಆಗಿದೆ' ಎಂದು ಶ್ರೀಕೃಷ್ಣನು ಹೇಳಿದ್ದಾನೆ.

ಪ್ರತಿಪದಾರ್ಥ -- ಹಿಂದೆ ಹೇಳಿದ 'ಆನುಕೂಲ್ಯೇನ ಗೃಹ್ಯಮಾಣತ್ವ' ಹಾಗೂ ಅನಿರ್ದೇಶ್ಯತ್ವಗಳಿಗೆ ಶ್ರುತಿಪ್ರಮಾಣವನ್ನೂ ಸಹ ಹೇಳುತ್ತಿದ್ದಾರೆ -

ಪರಿಪೂರ್ಣಚಂದ್ರಿಕಾ

ಅಖಿಲಮ್ = ಸಮಸ್ತಜಗತ್ತು, ಮತ್ತು ಯತ್ = ಯಾವ, ಆದಿತ್ಯಗತಂ = ಸೂರ್ಯನಲ್ಲಿರುವ, ತೇಜಃ = ಕಾಂತಿಯು, ಯತ್ = ಯಾವ, ಚಂದ್ರಮಸಿ = ಚಂದ್ರನಲ್ಲಿರುವ, ಯತ್ = ಯಾವ, ಅಗ್ನೌ = ಅಗ್ನಿಯಲ್ಲಿರುವ, ಕಾಂತಿಯು, ಭಾಸಯತೇ = ಪ್ರಕಾಶಿಸುತ್ತಿದೆಯೋ, ತತ್ = ಅಂತಹ, ತೇಜಃ = ಕಾಂತಿಯು, ಮಾಮಕಮಿತಿ = ನನ್ನದೇ ಆಗಿದೆಯೆಂದು, ವಿದ್ಧಿ = ಅರ್ಜುನನೇ ತಿಳಿ, ಇತಿ = ಹೀಗೆ, ಶ್ರೀಕೃಷ್ಣನು ಹೇಳಿದ್ದಾನೆ.(१)

भाष्यम् – 'न तद् भासयते सूर्यो न शशाङ्को न पावकः ।
यद् गत्वा न निवर्तन्ते तद् धाम परमं मम ॥'(गी.१५.६) इति च

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
ब्रह्मसूत्रभाष्ये अनुकृत्यधिकरणम्॥ ६॥

ಅನುವಾದ - 'ನನ್ನ ಯಾವ ಮಂದಿರವನ್ನು ಜ್ಞಾನಿಗಳು ಪಡೆಯುತ್ತಾರೋ ಪುನಃ ಅವರು ಹಿಂತಿರುಗುವುದಿಲ್ಲವೋ. ಅಂತಹ ಮಂದಿರವನ್ನು ಸೂರ್ಯ, ಚಂದ್ರ, ಅಗ್ನಿ ಮೊದಲಾದವರೂ ಸಹ ಬೆಳಗಲು ಸಾಧ್ಯವಿಲ್ಲ' ಹೀಗೆ ಗೀತೆಯಲ್ಲಿ ಹೇಳಿರುವುದರಿಂದ ಸೂರ್ಯ, ಚಂದ್ರ ಮೊದಲಾದವರು ಸ್ವತಃ ಬೆಳಗಲಾರರು ಮತ್ತು ಅವರನ್ನು ಅನುಸರಿಸಿ ಮತ್ತೊಂದೂ ಸಹ ಸ್ವತಂತ್ರವಾಗಿ ಬೆಳಗಲು ಸಾಧ್ಯವಿಲ್ಲವೆಂದು ತಿಳಿಯುತ್ತದೆ. ಆದ್ದರಿಂದ 'ಆನುಕೂಲ್ಯೇನ ಗೃಹ್ಯಮಾಣತ್ವ' ಮತ್ತು 'ಅನಿರ್ದೇಶ್ಯತ್ವ' ಮೊದಲಾದ ಧರ್ಮಗಳು ವಿಷ್ಣುವಿನಲ್ಲಿ ಮಾತ್ರ ಇರುತ್ತವೆಂದು ನಿರ್ಣಯಿಸಲಾಯಿತು.

ಪ್ರತಿಪದಾರ್ಥ -- ಸೂತ್ರದಲ್ಲಿರುವ 'ಅಪಿ' ಶಬ್ದಕ್ಕೆ ಯುಕ್ತಿ ಸಮುಚ್ಚಯಾರ್ಥತ್ವವನ್ನು ಸ್ವೀಕರಿಸಿ, ಸ್ಮೃತಿಯನ್ನು ಉದಾಹರಿಸುತ್ತಿದ್ದಾರೆ -

ಸೂರ್ಯಃ = ಸೂರ್ಯನು, ತತ್ = ಆ ನನ್ನ ಸ್ಥಾನವನ್ನು, ನ ಭಾಸಯತೇ = ಪ್ರಕಾಶಿಸಲು ಸಾಮರ್ಥ್ಯವನ್ನು ಹೊಂದಿಲ್ಲ. ಶಶಾಂಕಃ = ಚಂದ್ರನೂ ಸಹ, ನ = ಪ್ರಕಾಶಿಸಲಾರನು, ಪಾವಕಃ = ಅಗ್ನಿಯೂ ಸಹ, ನ = ಪ್ರಕಾಶಿಸಲಾರನು, ಯದ್ ಗತ್ವಾ = ಯಾವ ನನ್ನ ಸ್ಥಾನವನ್ನುಹೊಂದಿ, ನ ನಿವರ್ತಂತೇ = ಜ್ಞಾನಿಗಳು ಪುನಃ ಹಿಂತಿರುಗಲಾರರೋ, ತತ್ = ಅದು, ಮಮ = ನನ್ನ, ಪರಮಂ = ಶ್ರೇಷ್ಠವಾದ, ಧಾಮ = ಮನೆಯು ಆಗಿದೆ, ಇತಿ = ಹೀಗೆ ಸ್ಮೃತಿಗಳು ಹೇಳುತ್ತಿವೆ. ಆದ್ದರಿಂದ

(१) भाष्यदीपिका – यदेतल्लिङ्गद्वयस्य विष्णुनिष्ठत्वम् 'अहम्' इति श्रुत्योपपादितम् । तत्स्मृत्याऽप्युपपादयत्सूत्रं पठित्वा तां स्मृतिमुदाहरति – अपीति ॥ इति स्मर्यत इत्यन्वयः । 'यत्' आदित्यादिषु स्थितं तेजस्तत् 'मामकं' मदधीनं मदीयं च, मत्तेज एवाऽदित्यादिषु प्रेरकत्वेनास्ति । तदेवाखिलं जगत् 'भासयते' प्रकाशयतीति गीतास्मृत्यर्थः।

ಅನುಕೂಲ್ಯೇನ ಗೃಹ್ಯಮಾಣತ್ವಲಿಂಗವು ಪರಮಾತ್ಮನನ್ನು ಬಿಟ್ಟು ಬೇರೆ ಯಾರಲ್ಲಿಯೂ ಇರುವುದಿಲ್ಲವೆಂದು ಸಿದ್ಧವಾಯಿತು.[(१)]

ಇಲ್ಲಿಗೆ ಅನುಕೃತ್ಯಧಿಕರಣದಲ್ಲಿ ಭಾಷ್ಯ ಹಾಗೂ ಭಾಷ್ಯಾನುವಾದ ಮುಗಿಯಿತು.

---

(१) **भाष्यदीपिका** – किञ्च "काठके 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः' इत्याद्यानुकूल्येन गृह्यमाणस्य सुखस्य सूर्याद्यप्रकाश्यत्वमुच्यते । तच्च विष्णोरेव स्मर्यते, अतो विष्णुरेव 'तदेतत्' इत्यत्र प्रतिपाद्यः, न ज्ञानिसुखमिति सूत्रस्यार्थान्तरमपिपदस्य युक्तिसमुच्चयार्थत्वं चाभिप्रेत्य तां स्मृतिमुदाहरति – न तदिति ।। अत्रापीतिशब्दस्य स्मर्यत इत्यन्वयः । ज्ञानिनो 'यद्गत्वा' यत्प्राप्य पुनस्तस्मान्न निवर्तन्ते, तन्मम परमं 'धाम' स्वरूपं, तदेतद्धाम सूर्यो 'न भासयते' न प्रकाशयते, एवं चन्द्रः । यदा चैवं तदा कुतोऽयमवमोऽग्निरिति गीतास्मृत्यर्थः । अनेन – पूर्वव्याख्याने न केवलमनुकृत्यादिः 'अहं तत्तेजः' इति श्रुत्यन्तरे 'तमेव भान्तमनुभाति' इत्याथर्वणादौ विष्णुधर्मत्वेन श्रूयते, किन्तु यदादित्येति स्मर्यतेऽपीति श्रुतिसमुच्चयार्थेऽपिशब्दः । द्वितीयव्याख्याने तु 'तमेव भान्तमनुभाति' इत्युत्तरवाक्योक्तानुकृत्यादिहेतोः 'न तत्र सूर्यो भाति' इति पूर्ववाक्योक्तसूर्याद्यप्रकाश्यत्वहेतोश्च समुच्चयेऽपिशब्दः । तथा च न केवलं 'तदेतत्' इत्यत्रोक्तानुकूल्येन गृह्यमाणस्य विष्णुत्वरूपप्रधानसाध्ये हेतूकृतमनुकृत्यादिकम् 'अहं तत्तेजो रश्मीत्' इत्यादौ श्रूयते, किन्तु यदादित्येति स्मर्यतेऽपीति वा अपिः ।
किञ्च – यतो न केवलं प्रथमसूत्रोक्तलिङ्गद्वयं, किन्तु ततोऽन्यदपि 'न तत्र' इति काठकवाक्ये तस्याऽनुकूल्येन गृह्यमाणस्योक्तं सूर्याद्यप्रकाश्यत्वरूपं लिङ्गं तस्य विष्णोः सम्बन्धित्वेनैव 'न तत्' इति स्मर्यते । अतस्तदेतत् 'कथं नु तद् विजानीयाम्' इत्यत्र विष्णुरेव प्रतिपाद्य इति वा सूत्रस्यार्थद्वयमुक्तं भवति । 'न तत्र' इत्यादेरयमर्थः । पूर्वं ब्रह्म न सम्यग् भातीति तस्य दुर्ज्ञेयत्वमुक्तं, तत्कुत इत्यतः इदमुच्यते – यस्यैवंविधं सुखं रूपं 'तत्र' ब्रह्मणि सूर्यो 'न भाति' तन्न प्रकाशयतीति यावत् । चन्द्रतारकमिति द्वन्द्वैकवद्भावः । एवं तत्र विद्युतोऽपि 'न भान्ति' न भासयन्तीति । 'तमेव भान्तम्' इत्युत्तरवाक्यं तु यद्यपि व्यासतीर्थकृताथर्वणटीकायाम् – 'एतत्समाख्यारूपमाथर्वणवाक्यं' 'भान्तं' भासयन्तं परमात्मानमनुसृत्यैव सूर्यादयो घटादिकं 'भान्ति' भासयन्ति । तस्य परमात्मनो भासा 'सर्वमिदं' जगत् 'भाति' प्रकाशत इति व्याख्यातम् । तथाऽपि टीकानुसारात् 'सर्वं' सूर्यादितेजः 'भान्तं' प्रकाशमानं भगवन्तमनुसृत्यैव 'भाति' प्रकाशते । 'तस्य' भगवतो 'भासा' प्रकाशेन 'इदं सर्वं' जगत् 'भाति' प्रकाश्यत इति व्याख्येयम् । व्यासतीर्थीयं तु व्याख्यानान्तरं टीकाकृदभिप्रेतं भविष्यतीति न तद्विरोधः ।।६।।

।। इत्यनुकृत्यधिकरणम् ।। ६ ।।

ಪರಿಪೂರ್ಣಚಂದ್ರಿಕಾ

